ॐ

उद्बुध्यध्वं, समनसः, सखायः,
सं अग्निं इन्ध्वं, बहवः, सनीडाः,
दधिक्रां अग्निं उषसं च देवीं
इन्द्रावतो ऽवसे निह्वये वः।

ॐ

# मानव-धर्म-सार:

उदार-धीर-गम्भीर-वाचां भगवतो मनोः
कैश्चिद् भगवतो दासैः अयं सारः प्रसार्यते ।

# अशुद्धि-शोधनं

| पृष्ठ | पंक्ति | अशुद्धं | शुद्धं |
|---|---|---|---|
| ३ | १८ | अप्युपदिश्यते | आचक्ष्महे ननु |
| ,, | १९ | हि-उद्बोध्यते स्मृतौ | संस्मारयामहे |
| ५ | २० | करवावहै | करवामहै |
| १० | ७ | महाहाराः | महाऽऽहाराः |
| ४३ | २४ | आपत्सु-उपदेशकः परः | परमो बुद्धिदायकः |
| ४४ | २ | पूर्बुः | पूः |
| ७१ | ७ | कार्ये | कार्यें |
| ८९ | २३ | चाऽत्यपत्यानि | चाऽप्यपत्यानि |
| ९० | ११ | द्वेषाश्च | द्वेषश्च |
| ९२ | ४ | चतुर्विधाः | चतुर्विधा |
| ९७ | ४ | मानानां | मानवानां |
| १०९ | ६ | वस्त्रदो प्राण | वस्त्रदः प्राण |
| १५३ | २६ | तमोऽन्धं; | तमोऽन्धं"; (भा०) |
| १९३ | १३ | हि परिवर्त्तितं | विपरिवर्त्तितं |
| २०६ | ७ | दयाहप्स्वपि | दयार्हेप्स्वपि |
| २४४ | २० | स्नातकश्च | स्नातकश्च |
| २४५ | २३ | मै० उ० | बृ० उ० |
| २४७ | ४ | मै० उ० | सू० उ० |

ॐ

सर्वेस्तरतु दुर्गाणि,
सर्वो भद्राणि पश्यतु,
सर्वः सद्बुद्धिमाप्नोतु,
सर्वः सर्वत्र नन्दतु ।

ॐ

ॐ

# मानवधर्मसारः

## प्रस्तावना

मानवानां अशेषाणां सर्वथा हितकाम्यया
महीतले प्रवृत्तानां, वात्सल्यात् प्रसवितृवत्;
अध्यात्मविद्यामूलानां, सर्वज्ञानभृतां अपि,
वेदनिष्कर्षभूतानां, धात्रीणां सर्वसम्पदां;
चतुर्णां पुरुषार्थानां साधिकानां समंततः;
देशकालनिमित्तानां, गुणानां, अधिकारिणां,
सम्पदापदवस्थानां, विवेकेन विशेषतः
सर्वसम्वादयित्रीणां; विवादाऽपनुदां सदा;
उदारधीरगंभीरवाचां, भगवतो मनोः,
कैश्चिद् भगवतो दासैर्, अयं सारः प्रसार्यते।

प्रस्तूयतेऽत्र किल मानवधर्मसारः,
क्षीणाऽर्यवंशभरणोद्धरणप्रकारः,
भोगाऽपवर्गयुगलस्य च मार्गकारः;
संचार्यताम् अयं अशेषहितोऽस्त्युदारः;
सच्छास्त्रपूतधिषणाः! जनशिक्षितारः!
विस्तार्यतां च बहुशः, शुचिधर्मधारः,
दृष्ट्वा स्थितिं तु जगतोऽभिनवां, यथा स्यात्
'व्याख्यां नवां रचयितुं भवतां विचारः।

सत्यं ब्रवीमि,-उभयलोकहितं ब्रवीमि,
लोकौ-अतीत्य परमार्थयुजं च वच्मि,
प्राचीनशास्त्रहृदयं प्रणवीकरोमि;
स्वार्थे मतिं सहृदयां कुरुताऽर्यवर्याः।

ॐ

## पाठकेभ्यो निवेदनं

नाऽत्र व्याकरणप्रौढिर्, न किंचित् काव्यकौशलं,
नाऽपि पंडितमानित्वं, न स्वप्रख्यापनैषणा,
न स्वार्थसाधनेच्छाऽन्या काचनाऽत्र हृदि स्थिता;
सिपेविषैव लोकस्य प्रयत्नेऽस्मिन् प्रयोजिका;
भारतस्य विशेषेण, संप्राप्तस्याऽतिदीनतां,
सर्वाऽर्यजातिमूलस्याऽपि -आयातस्याऽत्यनार्यतां;
यतोऽस्मिन्उदिते, सर्वम् उदियान् मानवं कुलं;
संपन्ने भारते शांत्या, सर्वेऽन्ये शांतिं आप्नुयुः।

आभ्यंतरैर् अभिद्रोहैः देशोऽयं दासतां गतः,
नितरां दुर्बलो जातः, पराधीनजनाऽवृतः;
लोभाद्अस्य धनस्याऽपि, प्रेष्यभावं गतस्य च
जनस्य लोभात्, पाश्चात्याः विवदंते परस्परं,
आत्मानं, भारतं चापि, पीडयंतो दिवानिशं।
अतो हि, भारते वर्षे सुतरां सुव्यवस्थिते,
तादृग्व्यवस्था सर्वत्र प्रसरेत् जगतीतले।
पाश्चात्यैः, साम्प्रते काले, समाजव्यूहनाय याः
निर्मीयंते व्यवस्थास्, ताः विपद्यंते पदे पदे;
यतो नाऽध्यात्मसिद्धान्तान् अनुसंधन्ति शाश्वतान्।
प्रमाणं अस्मिन्अर्थे तु यद् आह भगवान् मनुः—
"एतद्देशप्रसूतस्य सकाशाद् अग्रजन्मनः,
स्वं स्वं चरित्रं शिक्षेरन्, पृथिव्यां सर्वमानवाः।
न हि-अनध्यात्मवित् कश्चित् क्रियाफलं उपाश्नुते।
या वेदबाह्याः स्मृतयः, याश्च काश्च कुदृष्टयः,
उत्पद्यंते च्यवंते ताः निष्फलाः अनृतास्तथा।
विद्वद्भिः सेवितः सद्भिर् नित्यं अद्वेषरागिभिः,

हृदयेनाऽभ्यनुज्ञातो, यो धर्मः तं निबोधत ।" (म०)
('अग्रजन्मे' तिशब्दार्थस् तु-अग्रे निर्वक्ष्यते स्फुटं) ।

चित्ते सम्यङ् निधाय-एतद्, अत्रस्थाऽर्थो विचार्यतां,
पूर्यन्तां त्रुटयश्चाऽपि सद्भावमृष्टमानसैः,
नीयतां च विशुद्धोऽर्थः भारतोद्धारकार्यतां ।

आर्षाः येऽत्र प्रयोज्यंते शब्दास्, तेषां तु केचन,
नव्यव्याकरणस्याऽनुयायिनां स्युर् असंमताः ;
तत्र कारणम् एतद् हि, पुराणपरमर्षयः,
न पाणिन्यादयोऽर्वाञ्चः, प्राञ्च एव तु सेविताः ;
महर्षीणां पुराणानां पुराणेतिह्यकारिणां
यथा कृताऽत्र शुश्रूषा, प्रायो नार्वाग्भुवां तथा ;
तेषां वाणी सुकल्याणी ब्रह्मचारेऽनुचर्यते
ततो भगवतो दासैर्, भावश्चाऽनुविधीयते ।
"पदज्ञैर्नाऽतिनिर्बंधः कर्तव्यो मुनिभाषिते ;
अर्थस्मरणतात्पर्यान् नाऽद्रियंते हि लक्षणं ।"

सर्वप्रांतेषु यन् नैकं प्राकृतं प्रतिबुध्यते,
बुध्यते संस्कृतं स्वार्थैर्, अतो व्याह्रियतेऽत्र तत् ।

नवं नैवाऽत्र सिद्धान्तं किञ्चिद् अभ्युपदिश्यते ;
प्राचीनं विस्मृतप्रायं एव हि-उद्बोध्यते स्मृतौ ।

सौर २३ आषाढ, १९९७ वि०,
७ जुलाई, १९४० ई०

---

परमात्मप्रार्थना

ॐ, सर्वात्मने परमात्मने नमः, ॐ

ॐ, भूः, भुवः, स्वः, तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात्। ॐ, योऽसावसौ पुरुषः सोऽहमस्मि, ॐ।

"ओमित्येकाक्षरं ब्रह्म व्याहरन्, मां अनुस्मरन्", (गी०)
यद्यदारभते कार्यं, तत् सत् सिद्धं भविष्यति।
"ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः,
त्रिपदा चैव सावित्री, विज्ञेयं ब्रह्मणो मुखं।
एकाऽक्षरं परं ब्रह्म, प्राणायामः परं तपः,
सावित्र्यास्तु परं नास्ति, मौनात् सत्यं विशिष्यते।
अकारं चाऽप्युकारं च मकारं च प्रजापतिः,
वेदत्रयान् निरदुहद्, भूर्भुवस्स्वरितीति च;
त्रिभ्य एव तु वेदेभ्यः, पादं पादं अदूदुहत्,
तदित्यृचोऽस्याः सावित्र्याः, परमेष्ठी प्रजापतिः।
आद्यं यत् त्र्यक्षरं ब्रह्म, त्रयी यस्मिन्प्रतिष्ठिता,
स गुह्योऽन्यस्त्रिवृद्वेदो; यस्तं वेद स वेदवित्।
एतम् एके वदन्त्यग्निं, मनुं अन्ये प्रजापतिं,
इन्द्रम् एके, परे प्राणं, अपरे ब्रह्म शाश्वतं;
प्रशासितारं सर्वेषां, अणीयांसं अणोरपि,
रुक्माभं, स्वप्नधीगम्यं, तं विद्यात् पुरुषं परं।
यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्त्तितः,
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः"। (म०)
मननात् त्रायते 'मंत्रो' यस्याऽसौ भगवान् 'मनुः',
किंकरस्याऽस्य तस्यैव, तदीयाऽज्ञां चिकीर्षतः,

प्रसीदतु, सुबुद्धिं च कार्यशक्तिं च यच्छतु;
आरंभमेतं सम्पूर्णं सफलं विदधातु च।
"श्रियः पतिर्यज्ञपतिर्धरापतिः,
प्रजापतिर्लोकपतिः सतीपतिः,
पतिर्गतिः संस्मृतिभर्जितात्मनां,
प्रसीदतां नो भगवान् सतां पतिः।
प्रणोदिता येन पुरा सरस्वती,
वितन्वताऽजस्य सती स्मृतिं हृदि,
स्वलक्षणा प्रादुरभूद् किलाऽस्यतः,
स मे ऋषीणां ऋषभः प्रसीदताम्।" (भा०)
"नमः सवित्रे, जगदेकचक्षुषे, जगत्प्रसूतिस्थितिनाशहेतवे,
त्रयीमयाय त्रिगुणात्मधारिणे विरिंचिनारायणशंकरात्मने।" आ.स्तो.
"ॐ गणानां त्वा गणपतिं हवामहे,
प्रियाणां त्वा प्रियपतिं भजामहे,
निधीनां त्वा निधिपतिं यजामहे, ॐ।"
"चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत्,
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः।" (दु०स०)
"ॐ यो देवानां प्रभवश्चोद्भवश्च, विश्वाधिपो, रुद्रो, महर्षिः,
हिरण्यगर्भं पश्यति जायमानं, स नो बुद्ध्या शुभया संयुनक्तु।
ॐ, सह नः अवतु, सह नः भुनक्तु, सह वीर्यं करवावहै,
तेजस्वि नः अधीतमस्तु, मा विद्विषामहै।
ॐ भद्रं कर्णेभिः शृणुयाम देवाः, भद्रं पश्येमाऽक्षभिर्यजत्राः,
स्थिरैरंगैस्तुष्टुवांसस्तनूभिः, व्यशेमहि देवहितं यद् आयुः।
ॐ भवेम शरदः शतं, रोहेम शरदः शतं, पुष्येम शरदः शतं,
भूषेम शरदः शतं, पश्येम शरदः शतं, शृणुयाम शरदः शतं,
प्रब्रवाम शरदः शतं, (आत्मज्ञाः) अदीनाः (स्वाधीनाः स्वराजः)

स्याम शरदः शतं;
भूयश्च शरदः शतात्। ॐ।
आत्मैवेदं सर्वमिति स वा एष एवं पश्यन्, आत्मरतिः,
आत्मक्रीड़, आत्मामिथुन, आत्मानन्दः, स स्वराट् भवति;
तस्य सर्वेपु लोकेपु कामचारो भवति;
(स्याम स्वराजः) ॐ।
ॐ येनेदं भूतं भुवनं भविष्यत् परिगृहीतं अमृतेन सर्वम्,
यस्मिंश्चित्तं सर्वमोतं प्रजानां, तन्नो मनः शिवसंकल्पमस्तु।
ॐ, अग्ने, नय सुपथा राये अस्मान्, विश्वानि, देव,
वयुनानि विद्वान्; युयोधि अस्मज्जुहुराणं एनः;
भूयिष्ठां ते नम उक्तिं विधेम। ॐ।
ॐ, हिरण्मयेन पात्रेण सत्यस्याऽपिहितं मुखं,
तत्त्वं, पूषन्, अपावृणु, सत्यधर्माय दृष्टये, ॐ।

---

ॐ

मनुं प्रति महर्षीणां प्रश्नः ।

"मनुं एकाग्रं-आसीनं अभिगम्य, महर्षयः,
प्रतिपूज्य यथान्यायं, इदं वचनं-अब्रुवन्—
भगवन्, सर्ववर्णानां, यथावद्, अनुपूर्वशः,"
सर्वेषां आश्रमाणां च, "धर्मान् नः-वक्तुमर्हसि;
त्वमेवैकोऽस्य सर्वस्य विधानस्य स्वयंभुवः,
अचिंत्यस्याऽप्रमेयस्य कार्यतत्त्वार्थवित्, प्रभो ।" (म०)
"धारणाद्धर्म इत्याहुः, धर्मो धारयति प्रजाः;"(म० भा०)
वर्णाश्रमात्मके धर्मे सर्वधर्मस्य संग्रहः;
अनेनैव हि धर्मेण भवेल्लोकस्य धारणं;
परस्परं च संबंधः, संग्रहो, ग्रथनं तथा,
मानवानां अशेषाणां, स्वस्वप्रकृतिरूपतः;
न विग्रहो, न स्खलनं, न परस्परदारणं;
कर्त्तव्यानां तथैवाऽधिकाराणां च परस्परं,
एकैकेनाऽधिकारेण कृत्यस्यैकस्य, बंधनं;
कृत्याऽधिकाररूपाभिर्मर्यादानां च रज्जुभिः
सर्वेषां मानवानां च बंधनं; धारणं ततः।
"व्यवस्थिताऽर्यमर्यादः, कृतवर्णाऽश्रमस्थितिः,
त्रय्या हि रक्षितो लोकः प्रसीदति, न सीदति ।" (कौ०)
"स्वे स्वे धर्मे निविष्टानां सर्वेषां, अनुपूर्वशः,
वर्णानां, आश्रमाणां च, राजा सृष्टोऽभिरक्षिता ।" (म०)
सुव्यवस्थां समाजस्य विना, सौख्यं न कस्यचित्;
विनाऽऽश्रमांश्च वर्णांश्च सा व्यवस्था न सिध्यति;

कृत्याऽधिकाररूपाश्च धर्माः एतन्निबंधनाः;
एतेषाम् एव धर्मैस्तु संबध्यंते परस्परम्,
'समाऽजतां' च प्राप्यंते, धार्यंते, चाऽखिला जनाः,
चतुर्भिः पुरुषार्थैश्च योज्यंते, स्खलनं विना।
धर्मास्तद् एषां एवाऽदौ पप्रच्छुर्मुनयो मनुं;
समस्तान् प्रशशासाऽपि तान्धर्मान् भगवान्मनुः।

हिन्दूनां क्षयरोगः।

'हिन्दू' नामकलोकस्तु सीदत्येव हि साम्प्रतं;
प्रत्यक्षमेव हिन्दूनां ह्रासः सर्वत्र दृश्यते;
न स्वधर्मे निविष्टास्ते वर्णाः, नाऽप्याश्रमास्तथा;
न वर्णान् आश्रमान् वाऽपि राजा कश्चन रक्षति;
दृश्यंते 'हिन्दवो' नित्यं परस्परं-उपद्रुताः,
तथाऽधुना प्रतिदिनं पीडिताः परधर्मिभिः;
ग्लानिर्धर्मस्य चैतेषां, धर्मवैविध्यमेव च;
तथैव परधर्माणां अभ्युत्थानं दिने दिने;
पाषंडिशत'पंथै'श्च 'हिन्दवो' जर्जरीकृताः;
कामजः क्रोधजश्चैषां दुराचारो गृहे गृहे।
"नारदो बहुतीर्थेषु भ्रममाण इतस्ततः,
नाऽपश्यत् कुत्रचित् शर्म मनःसंतोषकारकं;
कलिनाऽधर्ममित्रेण धरा-इयं बाधतेऽधुना;
सत्यं नास्ति, दया दानं तपः शौचं न विद्यते;
उदरंभरिणो जीवाः, वराकाः, कूटभाषिणः,
मंदाः, सुमंदमतयः, मंदभाग्या, ह्युपद्रुताः;
तरुणीप्रभुता गेहे, श्यालको बुद्धिदायकः,
कन्याविक्रयिणो लोभाद्, दंपतीनां च कल्कनं;

आश्रमाः यवनैः रुद्धाः, तीर्थानि सरितस्तथा;
देवतायतनानि-अत्र दुष्टैर्नष्टानि भूरिशः;
पाषंडनिरताः 'सन्तः'; 'विरक्ताः' सपरिग्रहाः;
न योगी, नैव सिद्धो वा, न ज्ञानी सत्क्रियो नरः।
कुकर्माचरणात् सारः सर्वतो निर्गतोऽधुना;
कथ्यते कणलोभेन, कथासारस्ततो गतः;
अत्युग्रभूरिकर्माणो नास्तिका रौरवा जनाः,
तेऽपि तिष्ठंति तीर्थेषु, तीर्थसारस्ततो गतः;
काम-क्रोध-महालोभ-तृष्णा-व्याकुल-चेतसः,
तेऽपि तिष्ठंति तपसि, तपस्सारस्ततो गतः;
मनसश्चाऽजयाल्, लोभाद्, दंभात्, पाखंडसंश्रयात्,
शास्त्राऽनभ्यसनाच्चैव, ध्यानयोगफलं गतं।
अट्टशूला जनपदाः, शिवशूला द्विजातयः,
कामिन्यः केशशूलिन्यः, संभवंति कलौ-इह।
(अट्टमन्नमिति प्रोक्तं, शूलो विक्रय उच्यते,
शिवस्तु वेदो विज्ञेयो, वरांगं केश उच्यते)।(भा०मा०)
या भागवतमाहात्म्ये दुर्दशेयं हि वर्णिता,
पंचषाणां शताब्दीनां पूर्वं, घोरतराऽद्य सा।
"प्रभवंति यदा सत्त्वे, मनोबुद्धींद्रियाणि च,
तदा कृतयुगं विद्यात्, ज्ञाने तपसि यद्रुचिः;
यदा धर्मार्थकामेषु भक्तिर्भवति देहिनां,
तदा त्रेता रजोवृत्तिर्, इति जानीहि, बुद्धिमन्;
यदा लोभस्तु-असंतोषो मानो दंभोऽथ मत्सरः,
कर्माणि चापि काम्यानि, द्वापरं तद्रजस्तमः;
यदा मायाऽनृतं तंद्रा निद्रा हिंसा विषादनं
शोको मोहो भयं दैन्यं, स कलिस्तामसः स्मृतः;

यस्मात् क्षुद्रदृशो मर्त्याः मंदभाग्याः महाऽशनाः
कामिनो वित्तहीनाश्च, स्वैरिण्यश्च स्त्रियोऽसतीः,
दस्यूत्कृष्टाः जनपदाः, वेदाः पाखंडदूषिताः,
राजानश्च प्रजाभक्षाः, शिश्नोदरपराः द्विजाः,
अव्रताः वटवोऽशौचाः, भिक्षवश्च कुटुंबिनः,
तपस्विनो ग्रामवासाः, (सं) न्यासिनोऽत्यर्थलोलुपाः,
ह्रस्वकायाः, महाहाराः, भूर्यपत्याः, गतह्रियः,
शश्वत्कटुकवक्तारो, जनाः मायोरुसाहसाः;
पतिं त्यजंति निर्द्रव्यं भृत्या अप्यखिलोत्तमं;
भृत्यं विपन्नं पतयः कौलं, गाश्चाऽपयस्विनीः;
पितृभ्रातृसुहृज्ज्ञातीन् हित्वा, सौरतसौहृदाः,
ननांदृस्यालसंवादाः, दीनाः स्त्रैणाः कलौ नराः;
नित्यमुद्विग्नमनसः, कर-दुर्भिक्ष-कर्षिताः,
निरन्ने भूतले प्रायो ह्यनावृष्टिभयातुराः,
वासोऽन्नपानशयनदाम्पत्यस्नेहभूषणैः
हीनाः, पिशाचसंदर्शाः, भवंत्येव कलौ प्रजाः।
कलौ काकिणिकेऽप्यर्थे विगृह्य, त्यक्तसौहृदाः,
त्यजन्ति च प्रियान्प्राणान्, जिघांसंति स्वकानपि"।(भा०)
आढ्याः महाढ्याः अत्यल्पाः, दरिद्रा भूरिशो जनाः,
दासभूताः शक्तिमतां, बहुरोगैरुपद्रुताः।

ह्रासकारणान्वेषणम्।

यदि नैतद् अभीष्टं स्यात्, प्रतीकारो विचिंत्यतां;
निश्चित्य कारणं पूर्वं, चिकित्सा क्रियतां ततः।
"कारणं तु चिकित्स्यं स्यात्, न कार्यं", इति देशना
आयुर्वेदे प्रसिद्धैव; सा-एवाऽत्र परिपाल्यतां।

ब्रुवंति बहवस्तत्र—'शासकाः परधर्मिणः ;
अतः समुचिता शिक्षा हिन्दूधर्मे न दीयते ;
हिन्दूधर्मस्तथाऽस्माकं शासकैर्नैव रक्ष्यते ;
परेषामेव दोषोस्ति, नाऽस्माकं तु कदाचन'।
दोषाऽरोपेण किंतु-एवं परेषु, नहि नो गतिः।
हस्ते शासनशक्तिस्तु परेषां परधर्मिणां,
हिन्दूंस्तिरस्कृत्य गता कस्माद्, इति विमृश्यतां।
कारणे कारणं किन्नु ?; "निदानं त्वादिकारणं ;"(अ०को०)
हिन्दूधर्मं शासकस्तु यदि-इच्छेद् अपि रक्षितुं,
किंरूपं ननु तद्धर्मं स रक्षेद् ? इति कथ्यतां।
शतशो ह्यस्य रूपाणि विवदन्ते परस्परं ;
धर्मोऽयं पूतिकूष्मांडीकृतः स्वार्थपरैर्जनैः।
"धर्म एव हतो हंति, धर्मो रक्षति रक्षितः," (म०)
इति यन्मनुनाऽऽदिष्टं, तत्र-एतत् तु विचार्यतां—
अस्ति किं रूपं अहतं अद्य धर्मस्य हिन्दुषु ?
मुंडे मुंडे मतिर्भिन्ना, भिन्नो 'धर्मो' गृहे गृहे—
इत्येव दृश्यते 'हिन्दू'-लोके, न तु-एकधर्मता।
किं शासकः-तस्य रूपं निर्णेष्यति-अत्र तात्त्विकं
एकं; अन्यानि सर्वाणि बलाच्चाऽपाकरिष्यति ?
सर्वद्विजानां मान्यः किं भविष्यत्येष निर्णयः ?
संघे शक्तिः सदैवाऽसीत्, कलौ साऽस्ति विशेषतः;
अवताराश्च येऽभूवन्, अतीतेषु युगेष्वपि,
नाऽसहायास्तु तेऽप्यासन्; नाऽस्ति हिंदुषु संघता।
"अपि चेत् सुकरं कर्म, तदप्येकेन दुष्करम्"। (म०)
सहाऽयनं विना किं स्यात् व्यवस्थितसमाऽजता ?
'समं जनाः अजंत्यस्मिन्', समाजोऽतः स उच्यते।

मुख-बाहू-रु-पद्-वद् ये सुसंवद्धाः परस्परं
स्वायंभुवेन, तेऽद्यत्वे त्रिसहस्रासु जातिषु,
अस्पृश्यासु, विभिद्यंते, विद्विष्टासु, इतरेतरं।
एवं विहतधर्माणां, ईर्ष्यालूनां परस्परं,
असंहतानां, भिन्नानां, ग्लानिर्न स्यात् कथं भृशं?
अनायासेन, शीघ्रं चापि,-एकैकं भज्यते तृणं;
तदेवाऽलं, गुणीभूतं, महागजनिबंधने।
एतेन भिन्नत्वेनैव राजशक्तिः प्रहापिता।
भारतीयास्तु राजानः, भिन्नाः द्विष्टाः परस्परं;
न सम्यग् उपदिष्टाश्च भ्रष्टैर्मंत्रिपुरोहितैः,
ह्रस्वमेव प्रपश्यद्भिः, न पुनर्दीर्घदर्शिभिः;
राष्ट्रीयतां अजानद्भिः, भृशं चाऽसमवेदिभिः,
न सद्भिर्विप्रैश्च सद्धर्मशीलतत्त्वेषु शिक्षितैः,
शिक्षितैः प्रत्युताऽसद्भिः असद्भावान् विमोहकान्,
अन्योऽन्यं असहायद्भिः, परस्परं असंहतैः,
क्षुद्रस्वार्थेषु निर्मग्नैः, वर्णैर् अन्यैर् उपेक्षिताः;
सुखेनैव व्यजीयंत बाह्यैर् आक्रमकारिभिः।
"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्;
बिभेत्यल्पश्रुताद् वेदो मां अयं प्रतरिष्यति" ।(म०भा०)
इतिहासविमर्शेन, प्रश्नेऽस्मिन् समुपस्थिते,
'हिन्दूनामेव दोषोऽस्ति नाऽन्येषाम्' इति सिध्यति।
ये 'नीचजातयोऽस्पृश्याः' कथ्यन्ते स्वोच्चमानिभिः,
तिरस्क्रियंते वचसा, क्रियया चा,ऽल्पदर्शिभिः,
ते-एव प्रायशो यान्ति परधर्मांस्तु मानदान्।
संख्या तु-एतादृशैर् एव परधर्मेषु वर्धिता,
प्रतिवर्षं च संकोचं आयाता सा च हिंदुषु।

निर्विवादमिदं सर्वं भारतैतिह्यवेदिनाम् ;
स्वयं स्वीक्रियते चाऽपि मुस्लिमैः क्रिस्चनैस्तथा ।
शतं प्रतिशतं पूर्वं संख्या या हिन्दुनाम् अभूत् ,
केवलं पंचषष्टिः सा शिष्टा-इदानी तु भारते ;
चत्वारिंशत् च पंचैव वंगदेशे तु साऽधुना ;
तथा पंचनदप्रांते किंचिद् एव ततोऽधिका ।
"पराबभूविरे चाऽतिमानेनैव हि तेऽसुराः ,
मुखं पराभवस्यैतद् योऽतिमानो ऽयमुच्यते" ।(श०ब्रा०)
घोराणां अपराधानां हेतोः कारासु वंदिनः ,
अग्निदाः, गरदाः हत्याकृतः, प्रत्यक्षलुंठकाः ,
बलात्स्त्रीधर्षकाश्चापि, मिथ्यालेखैः प्रतारिणः ,
प्रायशस्तु-'उच्चजातीयाः' एव संत्यपराधिनः ।
तथैव चोच्चंमन्येषु विट्-क्षत्र-ब्रह्मसु त्रिषु ,
विनाऽपराधं, मिथ्याऽभियोगैः क्षुद्रतरैरपि ,
उत्कोचग्रहणार्थाय, वैरनिर्यातनाय वा ,
बहिष्क्रियंते जातिभ्यो, 'मुख्यैस्' तु बहवो जनाः ,
विवशाश्चाऽन्यधर्मेषु विशंत्येव दिने दिने ,
हिन्दुभ्यश्च भृशं क्रुद्धाः पीडयंत्येव तांस्ततः ;
सर्वप्रांतेषु देशस्य कथां दुःखकरी इमां ,
इतिहासः कथयति; श्रूयते बधिरैर्न च ।
तथा च योषितो बह्व्यः, बाल्यकाले विवाहिताः ,
बाल्ये च विधवाः जाताः, दीनाश्चाऽपत्यवर्जिताः ,
स्वकीयैरेव दूष्यंते, निष्कास्यंते ततो गृहात् ;
अंधे तमसि मज्जंति, विह्वलं विलपंति च ,
निराश्रयाः अनाथास् ताः, जीवन्त्यो नरकं गताः ;
ततोऽन्यधर्मिभिः प्रायः प्रलोभ्यंते, पतंति च ,

वर्धयंति च तद्वंशान्, स्वांश्च पूर्वान् शपंत्यपि।
"आश्रयंते समीपस्थं राजानो वनिताः लताः"। (हि०)
"यत्र नार्यस्तु पूज्यंते रमंते तत्र देवताः;
यत्र-एतास्तु न पूज्यंते सर्वास्तत्राऽफलाः क्रियाः;
शोचंति जामयो यत्र विनश्यत्याशु तत् कुलं;
न शोचंति तु यत्रैताः, वर्धते तद् हि सर्वदा;
जामयो यानि गेहानि शपंति-अप्रतिपूजिताः,
तानि कृत्याहतानीव विनश्यंति समंततः"। (म०)
ईदृशाः दांभिकाः क्रूराः नशिष्यंति कथं नहि?
सर्वं प्रत्यक्षमेव एतद् हिन्दूनां ह्रासकारणं।
मतिः पवित्रम्मन्यानां अस्ति चैवाऽभिमानिकी,
'यथेष्टं भ्रश्यतां भ्रष्टो,ऽस्पृष्टाः शिष्टाः वयं सदा,
अपयातं मलं जातेस्, तेनाऽसंसृष्टा वयं ननु';
किंतु-अत्र चिंत्यं एतद् हि, 'प्रदीप्ते प्रतिवेशिनः
गृहेऽग्निना, तत्शमने नाऽहं कुर्यां सहायतां
यदि, उपेक्षक एव स्यां, मद्गेहं चाऽगमिष्यति
स एवाऽग्निः क्रमान् नूनं; न च कश्चन दास्यति
तदा मह्यं च साहाय्यं'। स्वार्थान्धस्तु न पश्यति,
मोहेनाऽवृतबुद्धिश्च तर्कयत्यायतिं नहि।
"आत्मानं सततं रक्षेद् दारैरपि धनैरपि",
इति कापुरुषी गाथा तादृशैः स्थापिता स्मृतौ;
क्षुद्रस्वार्थाऽभिभूतेन केनचिन् मूढबुद्धिना,
दिदृक्षुणा स्ववच् चाऽन्यान्, क्लीवेन,क्रूरभीरुणा,
श्लोकार्धं एतत् प्रक्षिप्तं, इति मन्यामहे वयं।
प्रजारक्षापरस्य-एतन् नाऽनुरूपं मनोर्वचः;
जीवन्मृतं ह्याह नृपं आश्रिताऽरक्षिणं मनुः;

वचो ह्येतन् महार्थं च, "देहत्यागो ऽनुपस्कृतः
स्त्रीबालाऽभ्यवपत्तौच, बाह्यानां (अपि) सिद्धिकारणं;"(म०)
स कथं कथयेद् ईदृग् वचः कापुरुषोचितं?
रामः खलु महाराजः, "प्रतिमानं महीभुजां",
अग्रणीः सर्वभूपानां, "मर्यादापुरुषः" स्वयं ,(वा०रा०),
लोकानां धर्मशिक्षायै स्वोदात्ताचरणेन यः,
देवो मनुकुलोत्तंसो, भूमौ-अवततार च,
"आदर्शमनुजः" सोऽयं सीताऽर्थं रावणं ह्यहन्,
समहद्राक्षसकुलं, कर्षन् भीषणवाहिनीं
'वानराणां' असंख्यानां, पृथिवीं अवलोड़यन्,
लंकां स्वर्णमयीं कुर्वन् समग्रां अधरोत्तराम्।
प्रत्याख्याति च विस्पष्टं क्षिप्तं पद्यं, महामुनिः,
बकासुरबधाऽख्याने, पूर्वोक्तं, भारते; यथा—
"न तु भार्यां त्यजेत् प्राज्ञः, पुत्रान् वाऽपि, कदाचन,
विशेषतः स्त्रियं रक्षेत् पुरुषो बुद्धिमान् इह;
त्यक्त्वा तु, पुरुषो, जीवन्, अहातव्यान् इमान्, सदा
न वेत्ति धर्मं कामं वाऽप्यर्थं मोक्षं च तत्त्वतः"।(म०भा०),
धर्माणां भ्रंशनैः एवं, शब्दाऽर्थानां विवर्त्तनैः,
मिथ्यागर्वैः, असत्स्वार्थैः, क्रौर्यैः, भीरुतया तथा,
पीडनैः अबलानां च, हिंदवो निरयं गताः।
क्षत्रियाश्चाऽपि ये शूराः अभूवन् मध्यमे युगे,
सुन्दोपसुन्दन्यायेन ते सर्वे विलयं गताः,
बाह्यैश्चापि व्यजीयन्त, यथोक्तं पूर्वमेव हि।
प्रबोधचंद्रोदयनाटके च, सुचित्रितं रूपमथो विचित्रं,
पाषंडिनां उद्धतदांभिकानां 'मोह' प्रजानां खलु कृष्णमिश्रैः।
"ज्वलन्निवाऽहंकारोऽयं ग्रसन्निव जगत्त्रयीम्,

भर्त्सयन्निव वाग्जालैः, प्रश्नयोपहसन्निव ।
( अहंकारः विकत्थते— )
'नाऽस्माकं जननी तथोज्ज्वलकुला; सच्छ्रोत्रियाणां पुनर्
व्यूढा काचन कन्यका खलु मया; तेनाऽस्मि ताताधिकः ;
अस्मच्छ्यालकभागिनेयदुहिता मिथ्याऽभिशप्ता यतः ,
तत्संपर्कवशान् मया स्वगृहिणी प्रेयस्यपि प्रोज्झिता ।'
मृद्बिन्दुलांछितललाटभुजोदरोरः-
कंठोष्ठपृष्ठचुबुकोरुकपालजानुः,
चूडाग्रकर्णकटिपाणिविराजमान-
दर्भांकुरः, स्फुरति मूर्त्त इवैष दम्भः ।
( दंभः ततोऽप्यति विकत्थते— )
'सदनम् उपगतोऽहं पूर्वम् अम्भोजयोनेः ,
सपदि मुनिभिर् उच्चैर् आसनेषु-उज्झितेषु ,
सशपथम् अनुनीय, ब्रह्मणा, गोमयाम्भः-
परिमृजितनिजोरौ-आशु संवेशितोऽस्मि । ..
विद्याप्रबोधोदयजन्मभूमिः वाराणसी ब्रह्मपुरी पुराऽऽसीत् ;
मोहस् तदुच्छेदविधिं चिकीर्षुर् निवस्तुमत्रेच्छति नित्यमेव ।
वशीकृता च भूयिष्ठा मया वाराणसी ततः ।
वेश्यावेश्मसु सीधुगंधललनावक्त्रासवाऽमोदितैर्
नीत्वा निर्भरमन्मथोत्सवरसैर् उन्निद्रचंद्राः क्षपाः ,
सर्वज्ञा इति, दीक्षिता इति, चिरात् प्राप्ताग्निहोत्रा इति ,
ब्रह्मज्ञा इति, तापसा इति, दिवा धूर्त्तैर् जगद् वंच्यते ।
गंगातीरतरंगशीतलशिलाविन्यस्तभास्वद्बृसी-
संविष्टाः, कुशमुष्टिमंडितमहादंडाः, करंडोज्ज्वलाः ,
पर्यायग्रथिताक्षसूत्रवलयप्रत्येकबीजग्रह-
व्यग्राग्रांगुलयो हरंति धनिनां वित्तानि-अहो दांभिकाः'।"(प्र.चं.)

उत्तमं नाटकं ह्येतद् सद्भिर्वैर् बहुमानितं,
अन्वेषिभिर् ह्रासहेतोः हिन्दूनां, परिशील्यताम्।
धर्मधान्यां यदा काश्यां एव मोहो विराजते,
प्रभुर्भूत्वा, दंभकामक्रोधलोभादिभिर् वृतः,
अन्यासु-अपि पुरीषु-एवं, तदा धर्मो ऽहतः कथम्?
"धर्म एव हतो हंति, धर्मो रक्षति रक्षितः;"(म०)
अतो, हतोऽयं धर्मस्तु हिन्दूनां मर्म कृन्तति।
अधुना येऽवशिष्यंते भूपाः 'क्षत्रिय'-मानिनः,
स्वप्रजापीडने शूराः प्रायस् ते, न तु रक्षणे।
'ब्राह्मणाः' किल येऽभूवन् ज्ञानसंग्राहिणोऽपि, ते
दुर्विद्याऽभ्यासिनो जाताः, सत्तपोरहितास् तथा,
असच्छास्त्रेषु मल्लाश्च, न प्रजाहितचिंतकाः।
"ब्राह्मणः समदृक् शांतो, दीनानां ह्युपेक्षकः,
स्रवते ब्रह्म तस्याऽपि, भिन्नभांडात् पयो यथा"। (भा०)
भलंदनाऽदयो वैश्याः वेदमंत्रकृतो ऽभवन्;
संस्कारशून्याः तद्वंश्याः प्रायशः संति साम्प्रतं;
न च ते सात्त्विकं दानं ददते; ऽपि तु राजसं,
विवेकरहितं, प्रायो ह्यपात्रेभ्यो ऽत्यपार्थकं;
तथैवोऽनृतभूयिष्ठं वाणिज्यं द्यूतवत् स्थितं।
समाधेर् ननु वैश्यस्य चरितं, लक्षशो द्विजैः
पठ्यते, नवरात्रेषु दुर्गायाः, प्रतिवत्सरं;
'वैश्यवर्य'-इति यं देवी स्वयं हि समबोधयत्,
वव्रे शुद्धं च यस्तस्याः ज्ञानं एव हि केवलं—
प्रायशस् तादृशाः वैश्याः न भवंति-अद्य भारते।
"सर्वेषामेव भावानां सामान्यं वृद्धिकारणं;
ह्रासहेतुर विशेषश्च; प्रवृत्तिर् उभयस्य तु;

सामान्यं एकत्वकरं, विशेषस्तु पृथक्त्वकृत्" । (च०)
विशेषो ऽति-एव जातीनां, हिन्दूनां ह्रासकारणं ;
सामान्यं च तथा-एतेषां वृद्धिहेतुर्भविष्यति ।
अतो हि वेदैर् आज्ञप्तं, "समानी वो प्रपा भवेत्" ।
एकस्मात् पूर्वपुरुषात् 'जातानां' एक'जाति'ता :
ईदृशाः सर्वदेशेषु शतशः संति जातयः ;
'सामान्येन' 'विशेषाणां' तासां संग्रहणाय वै ,
"चातुर्वर्ण्यं मया सृष्टं गुण-कर्म-विभागशः ,
कर्माणि प्रविभक्तानि स्वभावप्रभवैर् गुणैः" । (गी०)
'कर्मणां प्रविभागेन'—प्रोक्तं; न खलु 'जन्मना' ।
"निष्कारणस्तु नैवास्ति धर्मः सूक्ष्मोऽपि, जाजले!,
हेतुभिर् धर्मं अन्विच्छेत्, न लोकं विरसं चरेत्" ;
"जीवो नित्यो हेतुरस्य त्वनित्यः" ;(म०भा०)
सुखदुःखे मुख्यहेतू प्रवर्त्तन-निवर्त्तनात् ;
"परित्यजेद् अर्थकामौ यौ स्यातां धर्मवर्जितौ ,
धर्मं चाऽप्यसुखोदर्कं लोकविद्विष्टम् एव च" ; (म०)
अध्यात्मशास्त्रं एवाऽत्र स्वरूपं सुखदुःखयोः
धार्मिकं मार्मिकं चाऽपि तात्त्विकं खलु वेदयेत् ।
'जन्मवर्णा'त्मको 'धर्मो', ( 'धर्मो'ऽयं चेत् पुराऽभवत् ,
कस्मिंश्चिद् अपि काले ), ऽसौ-असुखोदर्क एव हि
साम्प्रतं बहुधा, तस्मात् परित्याज्यो ऽधुना ऽस्ति-अयं ।
जन्मनैव हि वर्णत्वे हेतुर् आप्तो न लभ्यते ;
न प्रत्यक्षं, नाऽनुमानं, न शास्त्रं विविधाऽगमं ।
"प्रत्यक्षं चाऽनुमानं च, शास्त्रं च विविधाऽगमं ,
त्रयं सुविदितं कार्यं, धर्मशुद्धिं अभीप्सता" । (म० )
कर्मणैव तु वर्णत्वे प्रमाणं लभ्यते त्रिधा ।

न मालिन्याद् ऋते हेतुर् अस्पृश्यत्वे ऽस्ति किंचन ;
अस्ति चेत्, स तु दम्भोऽस्ति, मिथ्याऽहंकार एव च।
स्पृश्याऽस्पृश्यविवेके तु, जातिनाम न कारणं,
किंतु-अवस्था मनुष्याणां निर्मला समला ऽथवा।
सत्यपूतं मनो येषां, देहः स्नानादिपावितः,
संचारिरोगाऽनाक्रान्तः, स्पृश्याः एव हि ते सदा।
अवतारं तु दशमं मन्यंते ऋषयोऽपि यं,
बुधाः पुराणकर्त्तारः, सर्वे ऽद्याऽपि च हिन्दवः,
बुद्धो ऽपि भगवान् अर्थं इमं एवाऽदिशद् विभुः,
वर्णाश्रमव्यवस्थां तु भूषयन्, ( न तु दूषयन् ),
शोधयन् 'कर्मणा-एव-इति', निराकुर्वंश्च 'जन्मना'।
पश्चात्, सहस्रवर्षेषु गतेषु तदनंतरं,
प्रायो जातेषु बौद्धेषु वामतंत्रानुसारिषु,
भ्रष्टेषु सत्पथाद् भूयो, व्यवस्था तु पुनः कृता,
कुमारिलाऽदिभिस् तत्र; तत्कालीनैश्च हेतुभिः,
'जन्मना-एव-इति' सिद्धान्तस् तदा तैः प्रबलीकृतः।
"कालचक्रे वहत्यस्मिन् घोरे सततयायिनि", (म०)
दुःखस्योत्पादको जातः सिद्धांतः स तु सांप्रतं,
अन्येषां कारणानां तु नवानां तत्र मिश्रणात्।
'वर्ण-संकर'-रोधार्थं सिद्धान्तो योऽनुमोदितः,
एकैकवंशे एकैककर्मकौशल्य-वृद्धये ;
एकैकवृत्त्या संतुष्टै, संघर्षस्याऽपनुत्तये ;
तथा क्षणिककामैश्च मूढानां, अविवेकिनां,
प्रकृत्या ऽसमशीलानां, संबन्धस्य निवृत्तये ;
सदर्थहानाज् जातोऽसौ स्वयं संकरकारकः।
"सर्वे -सर्वासु-अपत्यानि वर्णाः संजनयंति हि ;

कृतकृत्याः सर्ववर्णाः यदि वृत्तं न पश्यति" ।(म०भा०)
"व्यभिचारेण वर्णानां, अवेद्यावेदनेन च,
स्वकर्मणां च त्यागेन, जायंते वर्णसंकराः ।" (म०)
व्यभिचारो वहुविधः; वृत्तिसंकर एव च;
सर्वे चाप्यनुजीवन्ति-इदानीं सर्वास्तु जीविकाः ।
जात्यु-पो-पो-पजातीनां, अस्पृश्यानां परस्परं,
वर्णा-पो-पो-पवर्णानां, मिथोऽभोजि-अविवाहिनां,
अंत्ये मनुष्यगणने दशाब्दे, शासकैः कृते,
प्रायशस् त्रिसहस्राणि संख्यया गणितानि तैः,
हिन्दूनामकजीवानां, भिन्नानां सर्वथा मिथः ।
परस्परं अभिद्रोहैः, तिरस्कारैश्च, मत्सरैः,
अतः क्षीणाः, परैर् नित्यं धर्षिताश्चापि, हिन्दवः ।
अतः पुनः 'कर्मवर्ण'सिद्धान्तोद्गलनस्य वै
आवश्यकत्वं सम्प्राप्तं समाजस्य विशुद्धये;
स्वकर्मणां तु त्यागेन", "यदि वृत्तं न पश्यति"—
इति पूर्वोक्तशब्दार्थान् आर्षान् सम्यग् विचार्य च;
इहाऽमुत्रसुखस्यापि, पराऽनंदस्य चाऽऽप्तये ।
'वृत्तं', 'वृत्तिर्', 'जीविका' च, 'स्वधर्मः' 'कर्म' चैव हि,
पर्यायवत्तु शब्दानां अर्थः प्रायोऽत्र वर्त्तते ।

## रोगस्य मूलकारणम्

मूलं हि कारणं रोगे 'जन्मवर्ण'दुराग्रहः,
जनितश्च-उच्चजातीनां स्वार्थैर् दर्पैः कुबुद्धिभिः ।
दुराग्रहेणाऽनेन-एव प्रजायन्ते नवाः नवाः
'अन्तरालास्', तथा-एतेषां संख्या नित्यं विवर्धते;
( यथा प्रचलिते पाठे दृश्यते हि मनुस्मृतेः;

नाऽयं पाठो मौलिकः स्याद् इत्यग्रे दर्शयिष्यते ।)
यद् रीतिर् उच्चंमन्यानां अन्यैश्चाऽनुविधीयते,
परस्परविवाहादि-भोजनादि-विवर्जने,
हिन्दूनां जातयो जाताः त्रिसहस्रं अतो ऽधुना,
अन्योऽन्यं प्रति चाऽस्पृश्याः, विद्विषंत्यः परस्परं ।

हेतुविषये भ्रान्तयः

एतच् च चिंत्यं—किं सर्वे शासकाः संति-अहिन्द्वः ?
भारतेऽद्यापि संत्येव बहवो 'हिंदु'नामकाः
राजानः; तत्प्रजाश्चापि म्लानाः, सत्योऽपि 'हिन्द्वः' ।
नाऽस्त्येव तादृशं पापं, अपि घोरतमं किल,
यद् एभिः क्रियते नैव वहुभी 'राज'नामकैः;
तस्मिंश्चाऽपि समर्थ्यंते स्वकीयैस् ते पुरोहितैः,
अनुक्रियंतेऽपि तथा; "यथा राजा तथा प्रजा ।"
यद्यपि स्पष्टं आदिष्टं मनुना, भार्गवेण च—
"क्षत्रस्याऽतिप्रवृद्धस्य, ब्राह्मणान् प्रति, सर्वशः,
ब्रह्मैव संनियंतृ स्यात्; क्षत्रं हि ब्रह्मसंभवम् ।"(म०)
"जितेन्द्रियो, जितक्रोधो, लोभमोहविवर्जितः,
षडंगवित्, साङ्गधनुर्वेदवित्, चाऽर्थधर्मवित्,
यत्कोपभीत्या राजाऽपि धर्मनीतिरतो भवेत्,
नीति-शस्त्रा-ऽस्त्र-व्यूहा-ऽदिकुशलः स्यात् पुरोहितः;
स-एवाऽचार्यः पुरोधाः यः शापाऽनुग्रहयोः क्षमः ।
ब्राह्मणं तु स्वधर्मस्थं दृष्ट्वा, बिभ्यति चेतरे,
नाऽन्यथा, क्षत्रियाद्यास्तु; तस्माद् विप्रस्तपश्चरेत् ।
षड्भागभृत्या दास्यत्वे प्रजाभिस्तु नृपः कृतः ।" (शु०नी०)
व्यासो भारतकारश्च ब्रवीति-एवं महामुनिः—

"प्रजानां तु नृपः स्वामी, राज्ञः स्वामी पुरोहितः" ।(म०भा०)
विरलाः 'ब्राह्मणाः' किंतु; बहवो 'ब्राह्मणब्रुवाः' ।
"तपो विद्या च विप्रस्य निःश्रेयसकरं परं;
तपसा किल्बिषं हंति, विद्ययाऽमृतं अश्नुते" । (म०)
तपोविद्याविहीनो यो, नाऽसौ विप्रः कदाचन;
तपश्च, सात्त्विकं यत्स्यात्; विद्या, सात्त्विकबुद्धिजा;
कृष्णेन लक्षणं प्रोक्तं गीतायां चैतयोर् द्वयोः ।
वर्धनैर् नखकेशानां, भस्मपुंड्रादिधारणैः,
मालाभिर्विविधाभिश्च, वेशैश्चाऽपि विलक्षणैः,
नग्नत्वैर्, ऊर्ध्वबाहुत्वैर्, अधःशीर्षैश्च लम्बनैः,
विक्षिप्तवच्चाऽचरणैः, सत्तपो नहि सिध्यति ।
नैवाऽपि केवलन्याय-व्याकृति-आदौ परिश्रमैः,
तत्क्लिष्टशब्दोच्चारैश्च, सद्विद्या वाऽपि सिध्यति ।
सद्विद्यायाः अभावाच्च, तथा सत्तपसोऽपि च,
निरोधे दुष्टराजानां, स्वयं भ्रष्टाः, कथं क्षमाः ?
केचिद्-एवाऽवशिष्यंते ये हि 'राजर्षि' वन् नृपाः;
ब्राह्मणाः'ऋषिकल्पा'श्चाऽप्यति स्वल्पतरास् तथा ।
नाऽनृपी राज-यन्ता स्यात्; कवयो, राजपंडिताः,
राज्ञां प्रशस्तिकाराः हि, प्रायशो दुष्कृतां अपि,
स्वेषां राज्ञां लम्पटत्व-हिंसकत्व-प्रशंसकाः;
लुंठनं परराष्ट्राणां, पुरीणां ध्वंसनं तथा,
रोदनं परनारीणां, सुरते च पराक्रमं,
पशूनामिव हिंसाणां, स्तुवंति खलु ते मुदा;
केवलं चाटुकारास्ते, न यन्तारः प्रजाहिताः;
'स्व-हिताय पुरो ऽग्रे ये जनैः प्रतिनिधीकृताः,
अग्र्याः सद्धर्मकार्येषु', त एव हि 'पुरो-हिताः' ।

"कृतं, त्रेतायुगं चैव, द्वापरं, कलिरेव च,
राज्ञो वृत्तानि सर्वाणि; राजा हि युगं उच्यते ;
कलिः प्रसुप्तो भवति, स जाग्रद् द्वापरं युगं,
कर्मसु-अभ्युद्यतस् त्रेता, विचरंस्तु कृतं युगं ।
अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्बिषं ;
षोडशैव तु वैश्यस्य; द्वात्रिंशत् क्षत्रियस्य च ;
ब्राह्मणस्य चतुःषष्टिः, पूर्णं वापि शतं भवेत्,
द्विगुणा वा चतुःषष्टिः, तद्दोषगुणविद् हि सः ;
कार्षापणं भवेद् दंड्यो यत्राऽन्यः प्राकृतो जनः,
तत्र राजा भवेद् दंड्यः सहस्रं, इति धारणा ।" (म०)
राजानश्च, 'नवावा'श्च, 'पुलिसा'द्यधिकारिणः,
दंडशक्तिधराः सर्वे पापिनः प्रायशोऽधुना ;
केचनैवाऽवशिष्यंते ये प्रजाहितचिंतकाः ।
"राज्ञो हि रक्षाऽधिकृताः, परस्वाऽऽदायिनः शठाः
भृत्याः भवंति प्रायेण, तेभ्यो रक्षेद् इमाः प्रजाः ;" (म०)
तेषां सहायकाश्चाऽपि पापकार्येषु, सर्वदा,
धर्मध्वजाश्च दृश्यंते, प्रजासु-अंतर्गताः अपि ।
शिक्षके रक्षके चापि दुर्भावानां वशं गते,
व्याप्ताः प्रजाश्च दुर्भावैर्, "यथा राजा तथा प्रजा" ।
"यद् यद् आचरति श्रेष्ठः तत् तद् एव-इतरो जनः ;
स यत्प्रमाणं कुरुते लोकस्तद् अनुवर्त्तते ।" (गी०)
अन्योऽन्या'ऽनुग्रह'न्यायात् सर्वेऽपि निरयं गताः ;
शिक्षकाः वञ्चकाः जाताः, रक्षकाः भक्षकाः तथा,
पोषकाः मोषकाः भूताः, सेवकाः अपि घर्षकाः ।
अतो न केवलं शास्तृशक्त्यभावो हि कारणं ।
मिथ्याधर्मरतैर् यत्र धर्मस्यैवाऽधिकारिभिः

सद्धर्मो हन्यते, तत्र धर्मशिक्षा कथं भवेत्?
उत्तमांगे तु विभ्रष्टे, उत्तरांगं ततः क्रमात्,
बाहूदरं च, पादश्च, भ्रंशं आप्नोति-असंशयं।
ज्ञाने त्वशुद्धे संजाते, इच्छा दुष्टा भवेद् ध्रुवं,
ततः सर्वा क्रिया दुष्टा च,-इत्यनर्थपरंपरा।
"काममयोऽयं पुरुषः,
स यथाकामो भवति तत्क्रतुश्चापि;
यत् क्रतुरयं च भवति
तत्कर्म करोति, तदभिसंपद्यते चैव"। (बृ०उ०)

सङ्घे शक्तिः; तदभावे क्षयः, तदभावकारण

"समानी प्रपा, सह वो अन्नभागः, समाने योक्त्रे सह वो युनज्मि;
समानो मंत्रः, समितिः समानी, समानेन वो हविषा जुहोमि;
संगच्छध्वं, संवदध्वं, सं वो मनांसि जानताम्;
समानी व आकूतिः, समाना हृदयानि वः,
समानं अस्तु वो मनः"—इत्याऽऽज्ञापयति श्रुतिः। (वे०)
समानी वै प्रपा येषां, अन्नभागः सहैव च,
मंत्रः समानः, आकूतिः समानी, समितिस्तथा,
हृदयानि समानानि, समानं च तथा हविः,
योक्त्रे समाने ये युक्ताः, तेषामेव हितं भवेत्,
तेषामेव हि वृद्धिः स्यात्, तेषामेव जयः सदा।
न तु शीर्णविकीर्णानां त्रिसहस्रासु जातिषु,
अन्योऽन्यं भिद्यमानानां, तिरश्चापि चिकीर्षतां,
इतस्ततोऽस्तव्यस्तानां, छिन्नानां बहुभिर्मतैः।
किंतु नैवाऽद्य जायंते 'हिन्दूनां' सं मनांसि वै,
सं वदंति न वा ते तु, न सं गच्छन्ति वा मिथः,

मनाग् अप्येकता-बुद्धिर् लक्ष्यते न-एषु सांप्रतं ;
पाषंडिनां इन्द्रजालैः, नटैरिव, विमोहिताः
प्रत्यक्षं छलिभिर् वालाः, श्रद्धान्धाः तादृशेष्वपि ,
मूढग्राहैर्भृशं ग्रस्ताः, भ्रष्टाः वेदस्य सत्पथात् ,
नष्टमार्गाः महारण्ये यथा, तद्वद् भ्रमंति ते ।
हिन्दू-समाजः सर्वोऽयं नितरां व्रात्यतां गतः ,
आपादतलम् आचूडं पुनः संस्कारम् अर्हति ।
'कर्मणा वर्ण' इत्येतन्मंत्रेणैव तु संभवः
पुनरुज्जीवनस्याऽस्य पुनः संस्करणस्य च ।

कथं चिकित्सा; किमत्र शास्त्रं

"धर्म एव हतो हंति, धर्मो रक्षति रक्षितः ,
तस्माद् धर्मो न हंतव्यः," शास्त्येवं भगवान्मनुः । (म०)
"धर्माद् अर्थश्च कामश्च, स किमर्थं न सेव्यते ; (म०भा०)
ऊर्ध्वबाहुर्विरौति"-एवं महाभारतकृन्मुनिः ।
"धर्माद् अर्थः,ततः कामः, कामाद् धर्म्यसुखोदयः ,
इत्येवं निर्णयं शास्त्रे प्रवदंति मनीषिणः ।" (पद्मपु०)
सज्ज्ञानात्तु सदिच्छा स्यात्, ततः स्यात्सत्क्रिया, ह्यतः;
सद्धर्मरूपम् एवादौ निश्चेतव्यं प्रयत्नतः ।
न तादृङ् निर्णयं कर्त्तुं शक्ता बुद्धिस्तु तामसी ;
"अधर्मं धर्मं इति या मन्यते तमसाऽऽवृता ,
सर्वार्थान् विपरीतांश्च, बुद्धिः सा पार्थ तामसी ।" (गी०)
न वाऽपि राजसी बुद्धिर्धर्मरूपं विनिर्णयेत् ;
"यया धर्मं अधर्मं च कार्यं चाऽकार्यमेव च ,
अयथावत् प्रजानाति, बुद्धिः सा पार्थ राजसी ।" (गी०)
ज्ञातुं वक्तुं च सद्धर्मं बुद्धिः शक्ता तु सात्विकी ;

"प्रवृत्तिं च निवृत्तिं च, कार्याऽकार्ये, भयाऽभये ,
वन्धं मोक्षं च या वेत्ति, बुद्धिः सा पार्थ सात्त्विकी", (गी०)
वेदिनी-अध्यात्म-शास्त्रस्य,-इत्येवा ऽर्थाद् अवगम्यते ।
"अध्यात्मविद्या विद्यानां" वंधं मोक्षं च वेदयेत् ,
भयस्थानानि पापानि, निर्भयं चाऽमृतं पदं ,
कृत्याऽकृत्येऽपि हेतू ये ऽभयस्य हि भयस्य च ।
'शास्त्रमेव प्रमाणं स्यात् धर्माऽधर्मविनिर्णये' ;
'किं तच् छास्त्रं'–इदं चिंत्यं तत्त्वाधिगमकांक्षिभिः ;
"तस्माच्छास्त्रं प्रमाणं ते कार्याऽकार्यव्यवस्थितौ" , (गी०)
यद् एतद् उक्तं कृष्णेन, तद् व्याख्याति स्वयं प्रभुः ,
"इति गुह्यतमं शास्त्रं" अध्यात्मं शास्त्रं उच्यते ,
"राजविद्या राजगुह्यं" "गुह्याद् गुह्यतरं" तथा ,
"सर्वभूतेषु येनैकं भावम् अव्ययम् ईक्षते ,
अविभक्तं विभक्तेषु, तज्ज्ञानं विद्धि सात्त्विकं" । (गी०)
शास्ति यत् साधनोपायं चतुर्वर्गस्य निश्चितं ,
तथा तद्बाधनाऽपायं, एषा शास्त्रस्य शास्त्रता ;
सच्छास्त्रं तु तदेवा; ऽन्यद् "वाचो विग्लापनं" परं ।
ईदृक्शास्त्रेण यो धर्मः, आत्मज्ञानाऽश्रितेन हि ,
आदिश्यते, स एवाऽस्ति जगत्कल्याणकारकः ।
सर्वसंग्राहकः सोऽयं, चतुर्वर्णाश्रमात्मकः ,
राजविद्याऽनुसारेण कृष्णेनैवाऽस्ति शंसितः—
"चातुर्वर्ण्यं मया सृष्टं गुण-कर्म-विभागशः ,
कर्माणि प्रविभक्तानि स्वभावप्रभवैर् गुणैः" । (गी०)
उच्यते 'कर्म-शः' स्पष्टं; न पुन'र्जन्मने' ति हि ।
सांख्येषु विस्तरश्चोक्तः स्वभाव-गुण-कर्मणां ।
'परात्मनः स्वभावात्' तु, प्रकृतिं यं वदंति हि ,

त्रयो गुणाः प्रजायंते; त्रीणि कर्माणि चैव हि,
एकैकगुणवैशेष्यात्; 'द्विज-वर्ण-त्रयं' ततः।
'आन्वीक्षिकी'-आत्मशास्त्रस्य-एवाऽपरं नाम उच्यते;
राजाऽध्येयासु विद्यासु मूर्धन्या ख्यायते हि सा;
"आन्वीक्षिकीं आत्मविद्यां" अभ्यसेद् यत्नतो नृपः,
अध्याये राजधर्माणां आदेशोऽयं स्वयं मनोः। (म०)
"आन्वीक्षिकी-आत्मविद्या स्याद्, ईक्षणात् सुखदुःखयोः;
ईक्षमाणः तया तत्त्वं हर्षशोकौ व्युदस्यति"। (शु०नी०)
"प्रदीपः सर्वविद्यानां, उपायः सर्वकर्मणां,
आश्रयः सर्वधर्माणां, शश्वद् आन्वीक्षिकी मता"।
( वात्स्या० न्या० भा०; कौटि० अर्थशा० )

वर्त्तमाना शास्त्रदुर्दशा

न शास्त्रं वाग्विलासार्थं, मल्लयुद्धार्थमेव वा।
संस्काराय मनुष्याणां, व्यवहारस्य शुद्धये,
कल्याणार्थं समाजस्य, सौमनस्यार्थम् एव च,
शांत्यै, तुष्टै च, पुष्टै च, 'शास्त्रं' पूर्वैः प्रवर्त्तितं;
आदौ, मध्ये, तथाऽन्ते तैः 'शान्तिः' शान्तिः' च पठ्यते;
आरभ्यते चोपनिषत् 'सौम्य-तात'-प्रबोधनैः;
एतया चोपनिषदा-ऽध्यात्मविद्या-उपदिश्यते।
"विद्यया-औपनिषद्या यद् यदेव, श्रद्धया तथा,
क्रियते, तत्तदेव स्यात् कर्म वै वीर्यवत्तरं;" (छां०उ०)
"नह्यनध्यात्मवित् कश्चित् क्रियाफलं-उपाश्नुते"; (म०)
"अध्यात्मविद्या विद्यानां" प्रदीपो हि समन्ततः,
आश्रयः सर्वधर्माणां, उपायः सर्वकर्मणां,
चतुर्णामपि वर्णानां, इति मत्वा सुनिश्चितं,

कृत्ये योजयितुं पार्थं, विमुखं धर्मकर्मतः,
स्वबंधुवधभीतं च, गीता गीता रणाजिरे
सम्पूर्णा वासुदेवेना-ऽध्यात्मविद्योपदेशिका ।
न सौमनस्यं, नो शांतिः, पुष्टिस्तुष्टिर्न चैव हि,
नाऽत्मविद्याप्रयोगो वा व्यवहारस्य शोधने,
हिन्दुषु-इदानी कुत्रापि लभ्यो भारतभूतले ।
आचारभ्रंशनायैव बहु 'वेदान्त'-जल्पनं,
'नैष्कर्म्य'-वादो बहुशः, दंभनं मोहनं तथा
मुग्धानां अल्पबुद्धीनां, क्रूरं वंचनं-एव च,
मूढग्राहश्च विविधः प्राप्यः प्रत्युत भारते ।
'मीमांसा दिग्गजानां' च, 'मल्लानां व्याकृतौ' तथा,
तथा 'वेदांतसिंहानां', 'तर्ककेसरिणां' अपि,
दृश्यंते विदुषां मध्ये नियुद्धान्येव सर्वतः;
वाग्देव्याः 'रसनाग्रेषु विविधं चित्रनर्त्तनं',
समस्यापूर्त्तयो बह्व्यः, चमत्कृतस्फूर्त्तयस्तथा,
शृंगारबहुलान्येव कविसम्मेलनानि च,
विव्वोकाः विभ्रमाश्चापि भूरि, साहित्यसेविनां;
न जातु संहतो यत्नः समाजोद्धारकारकः ।
सम्पत्कालस्य सर्वं तच् छोभार्थं उचितं भवेत्,
तथा मनोविनोदाऽर्थं, ना-ऽपत्कालाय सम्मतं ।
वागाऽडम्बरमात्रेण शास्त्रेण-एतादृशेन किं?
साहित्येनाऽपि किं तेन प्रजासाह्यं अकुर्वता?
द्विजत्वेनापि किं तेन सत्तपोरहितं तु यत्?
"ब्राह्मणस्य तपो ज्ञानं, तपः क्षत्रस्य रक्षणं,
वैश्यस्य तु तपो वार्त्ता, तपः शूद्रस्य सेवनं;
आ ह-एव स नखाग्रेभ्यः परमं तप्यते तपः

यः स्रग्वी-अपि द्विजोऽधीते स्वाऽध्यायं शक्तितोऽन्वहं";(म.)
"अध्यात्मज्ञाननित्यत्वं, तत्त्वज्ञानार्थदर्शनं ×
एतज्ज्ञानं इति प्रोक्तं; अज्ञानं यद् अतोऽन्यथा ;
स्वाध्यायाऽभ्यसनं चैव वाङ्मयं तप उच्यते ;
स्वाध्याय-ज्ञान-यज्ञाश्च यतयः संशितव्रताः" ; (गी०)
स्वः आत्मा; तस्य चाऽध्यायः, श्रवणं, मननं तथा ;
निदिध्यासनम् एवापि, प्रत्यक्षीकरणं स्थिरं,
वेदो-पवेद-वेदान्त-वाक्यार्थानां विशेषतः,
तथा ऽनुषंगि-शास्त्राणां आत्मज्ञानो-पयोगिनां,
जीवात्मनो जगद्यात्रा-साधकानां तथैव च ।
"यदा चर्मवद् आकाशं वेष्टयिष्यंति मानवाः,
तदा देवम् अविज्ञाय दुःखस्यांतो भविष्यति" ; (उ०)
ज्ञात्वा देवं इहाऽत्मानं, तस्य प्रकृतिं एव च,
समाजस्य व्यवस्थां च कृत्वा तदनुसारतः,
आश्रमैश्चापि वर्णैश्च गुण-कर्म-विभागशः,
अंतः तु-अखिलदुःखानां कथंचित् संभविष्यति ।
"सर्वेषामपि चैतेषां आत्मज्ञानं परं स्मृतं ;
योऽनधीत्य द्विजो वेदं, अन्यत्र कुरुते श्रमं,
स जीवन्नेव शूद्रत्वं आशु गच्छति साऽन्वयः ।" (म०)
सद्धर्मस्यानुसारेण चतुर्वर्गप्रदानि वै,
सच्छास्त्राणि तु सर्वाणि, "वेद एव हि सर्वशः" (म०भा०)
"एकोऽपि वेदविद् धर्मं यं व्यवस्येद् द्विजोत्तमः,
स विज्ञेयः परो धर्मो, नाऽज्ञानां उदितोऽयुतैः" ; (म०)
"ब्रवीति यं स धर्मः स्याद् एको वाऽध्यात्मवित्तमः ।" या०स्मृ०)
"आर्षं धर्मोपदेशं तु, वेदशास्त्राऽविरोधिना,
यस्तर्केणाऽनुसंधत्ते स धर्मं वेद नेतरः" ; (म०)

अतो यस्तु-आत्मविज्, ज्ञानी, विश्वमैत्रः, तपोयुतः,
'अग्रजन्मा' स वाच्यः स्यात्; नाऽन्यस्तं शब्दं-अर्हति।
प्रथमं पृथिवीलोके, आत्मलोके ततः पुनः,
द्विवारं जायते यस्मात्, तस्माद् 'द्विज' इति स्मृतः;
"मातुः-अग्रेऽधिजननं, द्वितीयं मौञ्जिबंधने"; (म०)
अंतर्दृष्टिविकासेन येनाऽत्मा सुसमीक्षितः,
स्वचित्तगुणदोषाणां परीक्षाकरणे क्षमः
जातः, स्वदुष्प्रवृत्तीनां विनिग्रहणतत्परः
यश्च जातो, 'द्विजः' सोऽस्ति, नाऽन्यस्तं शब्दं-अर्हति।
वेदेषु-अपि-अयमेवाऽर्थो रूपकेणाऽस्ति वर्णितः।
"यत् पुरुषं व्यदधुः, कतिधा व्यकल्पयन्,
मुखं किम् अस्याऽसीत्, किं बाहू, किं ऊरू, पादा उच्येते?
ब्राह्मणोऽस्य मुखं आसीत्, बाहू राजन्यः कृतः,
ऊरू तद् अस्य यद् वैश्यः, पद्भ्यां शूद्रो अजायत।
सहस्रशीर्षा पुरुषः, सहस्राक्षः, सहस्रपात्,
स भूमिं सर्वतः स्पृत्वा, अत्यतिष्ठद् दशांगुलं।"(वे०)
"ब्रह्म वक्त्रं, भुजौ क्षत्रं, कृत्स्नं ऊरूदरं विशः,
पादौ यस्याऽश्रिताः शूद्राः, तस्मै वर्णात्मने नमः।"(म०भा०)
रूपकस्याऽस्य विस्पष्टः प्रत्यक्षोऽर्थो, न संशयः;
समाजो मानवानां वै सहस्राक्षः, सहस्रपात्,
सहस्रबाहुजंघोरुः, सर्वतोऽक्षिशिरोमुखः;
समाजस्य शरीरेऽस्मिन्, 'ज्ञानी' स्थानी मुखस्य वै;
भुजस्थानी तथा 'वीरो' धीरो रक्षणकर्मसु;
ऊरूदरं तु प्रत्यक्षं अन्नदः प्राणदो वणिक्;
पादौ सर्वधरौ चाऽ'शु-द्र'वितारौ सहाऽयने।
ईदृशः 'पुरुषो' ऽसंख्यपाणिपादशिरोमयः,

इन्द्रियैः 'अंग' शब्दोक्तैः 'दश'भिः-चाऽपि संयुतः,
'सृत्त्वा', व्याप्य, महीं सर्वां, सर्वदेशेषु-अधिष्ठितः।
सर्वेषां 'अग्रजन्मा' च, जनकश्च-आदिमो नृणां,
शास्ता च, शासिता चापि, स्वस्यैवाऽनन्तसन्ततेः,
स्वयं मनुः शिक्षयति "पृथिव्यां सर्व मानवान्";
आद्यास्तन्मंत्रिणः सप्त, पुत्राश्चापि, महर्षयः,
येऽत्र 'शिष्टाः' पूर्वकल्पात्, 'शिष्टा'श्च बहु शिक्षिताः,
कल्पेऽस्मिन्, मानवान् शास्तुं धर्मं, जाग्रति-अहर्निशं,
युगाऽवर्त्तानुसारेण, ते चैवाऽनुवदंति तं।

समाजः; तद्व्यवस्थायाः रूपं; दर्शनं; सिद्धान्ताः;
वर्णाः; आश्रमा; धर्माः; पुरुषार्थाः

'समं जनाः अजन्त्यस्मिन्' समाजो ऽतः स उच्यते;
समं जनानां अजनं, सुखं चैवापि कस्यचित्,
व्यक्तीनां जीवनस्यापि, समूहस्यापि वै तथा,
सुव्यवस्थां विना, नैव सिध्यतीह कदाचन।
चतुर्भिरेव वर्णैश्च, चतुर्भिश्चाश्रमैस्तथा,
सुव्यवस्था-ईदृशी साध्या-इत्याज्ञा सर्वविदो मनोः।
मनोः सकाशात् स्वपितुः, अत एव, महर्षयः
वर्णानामाश्रमाणां च धर्मान् आदौ शिशिक्षिरे।
सा सुव्यवस्था,-आधारेण सिद्धान्तानां, सुसिध्यति,
अध्यात्मशास्त्रमूलानां; ते धार्याः हृदये सदा।
सर्वात्मनो यतो नित्यं प्रकृतिस्त्रिगुणात्मिका,
चतस्रोऽतः प्रकृतयः नृणां, गुणविभेदतः—
सत्त्वाऽधिका, रजःप्राया, तथैव च तमोऽधिका,
(नत्वेव-एकान्ततः काऽपि), गुणसाम्याच्च् चतुर्थिका।

गुणानां मिथुनत्वाच्चापि,-अपृथक्त्वाच्च सर्वथा,
सर्वासां प्रकृतीनां हि वीजं सर्वत्र सर्वदा;
हेतुना च विशिष्टेन विकासस्याऽस्ति संभवः
कस्यापि-एकस्य, कुत्राऽपि, कर्सिंश्चिद्वा, गुणस्य वै;
एषो ह्यध्यात्मशास्त्रस्य सांख्ययोगस्य निर्णयः।
"जात्यन्तरपरीणामः आपूरात् प्रकृतेर् भवेत्"; (यो०सू०)
"अन्योन्याऽभिभवा-श्रय-मिथुन-जननवृत्तयश्चगुणाः"।(सां०का०)
"न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः,
सत्त्वं प्रकृतिजैर् मुक्तं यत् स्याद् एभिस् त्रिभिर्गुणैः"।(गी०)
"चातुर्वर्ण्यं मया सृष्टं गुण-कर्म-विभागशः,
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः";
"इज्या-ऽऽचार-दमा-ऽहिंसा-यज्ञ-स्वाध्याय-कर्मणां,
अयं तु परमो धर्मो, यद् योगेना ऽत्मदर्शनं";(या०स्मृ०)
"सर्वेषामपि चैतेषां आत्मज्ञानं परं स्मृतं,
तद्धि-अग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः;
सम्यग्दर्शनसंपन्नः कर्मभिर् न निवध्यते;
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते।" (म०)
'सम्यग्दर्शन'-शब्देन प्रोक्तम् अत्राऽत्मदर्शनं;
आत्मनः प्रकृतेश्चापि दर्शनं खलु 'दर्शनं'।
"सुखाऽभ्युदयिकं चापि नैःश्रेयसिकमेव च,
प्रवृत्तं च निवृत्तं च, द्विविधं कर्म वैदिकं।" (म०)
यद् आभ्युदयिकं चैव, नैःश्रेयसिकमेव च,
सुखं साधयितुं मार्गं दर्शयेत् तद्धि 'दर्शनं'।
"यतस्त्वभ्युदयस्याऽपि, तथा निःश्रेयसस्य च,
सिद्धिर्भवेत् स धर्मः स्यात्"-सूत्रं वैशेषिकं त्विदं।(वै०सू०)
आत्मदर्शनजो ह्येव धर्मस्तु-उभयसाधकः।

त्रिवर्गो'ऽभ्युदयः' प्रोक्तः, मोक्षो 'निःश्रेयसं' स्मृतं ;
"धर्मश्चाऽर्थश्च कामश्च त्रिवर्ग इति तु स्थितिः ;" (म०)
चतुर्थः पुरुषार्थानां वर्गो मोक्षस्तु कथ्यते।
"सर्वविद्याप्रतिष्ठा हि ब्रह्मविद्यैव" घोषिता ; (उ०)
"अध्यात्मविद्या विद्यानां, वादः प्रवदतां अहं ;" (गी०)
ब्रह्मविद्याऽत्मविद्या स्याद्, अध्यात्मं शास्त्रमेव च ,
तस्यां अंतर्गतं सर्वं जीवात्मविषयं यतः ;
जीवस्याऽनुभवानां हि, तथा चित्तशरीरयोः
अंतर्बहिःकरणयोः वर्णनं तत्र विद्यते।
तत्प्रणीतेन धर्मेण, तत्सिद्धांताऽनुसारिणा ,
संग्रथ्यते समाजश्चेज्, जीर्णोद्धारो भवेत् तदा।
'वर्णस्तु कर्मणे' वेति सिद्धान्तः प्रथमः स्मृतः ,
प्रसंगेऽस्मिन्; विना-एतेन, दुर्दशैव विवर्धिनी।
"कृतयज्ञं तु राजन्यं, वैश्यं वा, ब्राह्मणं वदेत्"—
इत्याज्ञापयति स्पष्टं सत्या शातपथी श्रुतिः ;(श०ब्रा०)
"एतां काष्ठां अवष्टभ्य सर्वो ब्राह्मण उच्यते"—
'ब्रह्मविद्'-विषये त्वेवं वक्ति' वार्त्तिक'-कारकः।(वृ०उ०वा.)
ऐलूषकवषाऽख्यानं, वेदेषु प्रतिपादितं ;
विस्पष्टं एतं एवाऽर्थं ब्रवीति सुविनिश्चितं ;
शूद्रस्य पुत्रः कवषः, तपसा वर्चसा युतः ,
ऋषिभिर्ब्राह्मणत्वेन स्वीकृतः, सिद्धः, आनतैः। (वे०)

### कर्मणा वर्णः; पुराणोदाहरणानि

इतिहासपुराणेषु वर्णानां परिवर्त्तनं ,
स्वस्वकर्मानुसारेण, जीविकावृत्तिभिस्तथा ,
उपाख्यानैस्तु विविधैः शतशश्चास्ति-उदाहृतं ;

न-एकेन विश्वामित्रस्य वृत्तांतेन-एव केवलं।
"इतिहासपुराणाभ्यां वेदं समुपबृंहयेद्,
विभेत्यल्पश्रुताद् वेदो मां अयं प्रतरिष्यति"; (म०भा०)
"धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः,
ते शिष्टाः ब्राह्मणाः ज्ञेयाः श्रुतिप्रत्यक्षहेतवः"; (म०)
कर्णैरेव श्रुतं यत् तन् नेत्रेभ्यो दर्शयंति ये,
श्रुतीनां तात्त्विकं चार्थं मार्मिकं ख्यापयंति ये,
वहुश्रुतास्ते विज्ञेयाः 'श्रुतिप्रत्यक्षहेतवः'।
विना-उदाहरणैः स्पष्टैः सम्यग् अर्थो न वुध्यते,
शास्त्रेषु-अंतर्धृतानां हि सिद्धांतानां कथंचन;
"अत्राप्युदाहरंति-इमं इतिहासं पुरातनं"—
इत्युक्त्या,वहुधाऽख्यानैर् अर्थो व्यासैः स्फुटीकृतः।
महाभारतगाथा-इयं सुप्रसिद्धा-एव वर्त्तते—
"न विशेषोस्ति वर्णानां, सर्वं ब्राह्मं इदं जगत्,
ब्रह्मणा पूर्वसृष्टं हि, कर्मभिर्वर्णतां गतं"।(म०भा०)
सर्वेष्वपि पुराणेषु तथा रामायणेऽपि च,
वहुशो भारते चापि, कीर्त्तिता कर्मवर्णता।
"अप्रवृत्तिः कृतयुगे कर्मणोः पुण्यपापयोः;
वर्णाश्रमव्यवस्थाश्च न तदा-आसन् न संकरः;
त्रेतायुगे तु-अविकलः कर्माऽरंभः प्रसिध्यति,
वर्णानां प्रविभागाश्च त्रेतायां तु प्रकीर्त्तिताः।
( वायुपुराणं, अध्यायाः ८, ४३, ३९, ५७ आदि )
चत्वारोऽपि प्रजायन्ते वर्णाः एककुलाद् इति—
वहु-उदाहरणानि-अस्य पुराणेषु भवंति वै।
"एते तु-अंगिरसः पुत्राः जाताः वंशेऽथ भार्गवे,
ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राश्च, भरतर्षभ;

सम्बन्धो ह्यस्य वंशेऽस्मिन् ब्रह्मक्षत्रस्य विश्रुतः ; ×
दिवोदासश्च राजर्षिः अहल्या च यशस्विनी ; ×
दिवोदासस्य दायादो ब्रह्मर्षिर्मित्रयुर्नृपः ; ×
नाभागादिष्टपुत्रौ च वैश्यौ ब्राह्मणतां गतौ ।"
( हरिवंश० अ० ३२; अ० ११ )

"प्रियव्रतो नाम सुतो मनोः स्वायंभुवस्य यः,
तस्याग्नीध्रस्, ततो नाभिः, ऋषभस्तत्सुतः स्मृतः ;
तं आहुः वासुदेवांशं, मोक्षधर्मविवक्षया
अवतीर्णं; सुतशतं तस्याऽसीद् ब्रह्मपारगम् ;
तेषां वै भरतो ज्येष्ठो नारायण-परायणः,
विख्यातं वर्षम् एतद् यन्नाम्ना भारतम् अद्भुतम् ।
तेषां नव नवद्वीपपतयोऽस्य समन्ततः ;
नवाऽभवन् महाभागाः, परमार्थस्य शंसिनः,
श्रमणाः, वातरशनाः, आत्मविद्याविशारदाः ;
कर्मतन्त्रप्रणेतारः एकाशीतिर्द्विजातयः ;
यवीयांस एकाशीतिः महाश्रोत्रियाः
कर्मविशुद्धाः ब्राह्मणाः बभूवुः ।"
(भा० स्कं० ११, अ० २; स्कं० ५, अ० ४)

"धृष्टाद् धार्ष्टम् अभूत् क्षत्रं ब्रह्मभूयं गतं क्षितौ ;
ततो ब्रह्मकुलं जातं आग्निवेश्यायनं, नृप ।
नाभागो दिष्टपुत्रोऽन्यो कर्मणा वैश्यतां गतः ।"
"शर्यातिर्मानवो राजा ब्रह्मिष्ठः स बभूव ह,
यो वा अंगिरसां सत्रे द्वितीयमह ऊचिवान् ।"
"गर्गात् शिनिः, ततो गार्ग्यः, क्षत्राद् ब्रह्म ह्यवर्त्तत ;
दुरितक्षयो महावीर्यात्, तस्य त्रय्यारुणिः, कविः,
पुष्करारुणिरित्यत्र, ये ब्राह्मणगतिं गताः ; ×

भर्म्याश्वस्, तनयाः तस्य पंचासन् मुद्गलादयः ;
मुद्गलाद् ब्रह्म निर्वृत्तं गोत्रं मौद्गल्यसंज्ञितम् ;
मिथुनं मुद्गलाद् भार्म्याद्, दिवोदासः पुमानभूत्,
अहल्या कन्यका, यस्यां शतानन्दस्तु गौतमात्" ।
( भा० स्कं० ९, अ० २, ३, २१ )

ययातिः क्षत्रियः सम्राट्, शुक्राचार्यस्य पुत्रिकां
उपयेमे देवयानीं, यदु-कृष्णौ यदन्वये ;
इतिहासपुराणेषु कथा-ऽयं बहु वर्णिता ;
ब्रह्मर्षेः कर्दमस्याऽपि कन्यां काम्यां उदावहत्
प्रियव्रतस्तु राजर्षिः, स्वायंभुवमनोः सुतः ;
"काम्या प्रियव्रताल्लेभे स्वायंभुवसमान् सुतान्
दश, कन्याद्वयं चैव, यैः क्षत्रं सम्प्रवर्त्तितं । ×
रजसो (ब्रह्मर्षेः) चाप्यजनयन् मार्कंडेयी यशस्विनी,
प्रतीच्यां दिशि राजन्यं केतुमंतं प्रजापतिम् ।"
( वा० पु० अ० २८ )

"वैश्ययोन्यां समुत्पन्नाः, शूद्रयोन्यां तथैव च,
ब्रह्मर्षय इति प्रोक्ताः पुराणाः द्विजसत्तमाः ; ×
लोकोऽनुमन्यते चैतान्, प्रमाणं ह्यत्र वै तपः । ×
कपिंजलादो ब्रह्मर्षिः चांडाल्यामुदपद्यत ; ×
अदृश्यन्त्याः पिता वैश्यो, नाम्ना चित्रमुखः, पुरा
ब्राह्मणत्वमनुप्राप्तो, ब्रह्मर्षित्वं च, कौरव ;
कन्यां, चित्रमुखः, शक्तेर् वसिष्ठ-तनयस्य वै,
शुभां प्रादाद्, यतो जातो ब्रह्मर्षिस्तु पराशरः ;
तथैव दाशकन्यायां सत्यवत्यां, महानृषिः
पराशरात् प्रसूतश्च व्यासो योगमयो मुनिः ;
वीतहव्यश्च नृपतिः श्रुतो मे विप्रतां गतः ;

भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः,
वीतहव्यो महाराजो, ब्रह्मवादित्वमेव च।"
(म० भा० अनु०, अ० ५३-८)

वेदेषु-अन्यानि-अपीदृशि वृत्तानि-उक्तानि संति वै।
"शूद्रयोनौ हि जातस्य सद्गुणान् उपतिष्ठतः
वैश्यत्वं भवति, ब्रह्मन्, क्षत्रियत्वं, तथैव च,
आर्जवे वर्त्तमानस्य ब्राह्मण्यमभिजायते। × ×
ब्राह्मणः, पतनीयेषु वर्त्तमानो विकर्मसु,
दाम्भिको, दुष्कृतप्रायः, शूद्रेण सदृशो भवेत्।
यस्तु शूद्रो, दमे सत्ये धर्मे च सततोत्थितः,
तं ब्राह्मणं अहं मन्ये; वृत्तेन हि भवेद् द्विजः॥
(म० भा० वन०, अ० २१६-२१९, धर्मव्याधकथा)

"जन्मना जायते शूद्रः,संस्काराद् द्विज उच्यते,
वेदपाठी भवेद् विप्रः, ब्रह्मज्ञो ब्राह्मणो भवेत्। (अत्रिस्मृ०)

"शूद्रेण हि समस्तावद् यावद् वेदे न जायते।
शूद्रो ब्राह्मणताम् एति, ब्राह्मणश्चैति शूद्रताम्,
क्षत्रियाज्जातमेवं तु विद्याद्, वैश्यात् तथैव च।
यादृग्गुणेन भर्त्रा स्त्री संयुज्येत, यथाविधि,
तादृग्गुणा सा भवति, समुद्रेणेव निम्नगा।
अक्षमाला वसिष्ठेन संयुक्ताऽधमयोनिजा,
शारंगी मन्दपालेन, जगामाभ्यर्हणीयतां"। (मनु०)

"ब्राह्मण्यां क्षत्रियाज्जातः स सूत इति कथ्यते;
प्रतिलोमजवर्णानां स हि-एवैको द्विजः स्मृतः;
सूतैश्च सह सम्बन्धः पूर्वं नृपतिभिः कृतः"।
( म० भा० विराट०, कीचकाख्यान० )

"अग्निषेणः, कौरव्य, ब्राह्मण्यं संशितव्रतः
तपसा महता, राजन्, प्राप्तवान् ऋषिसत्तमः ;
सिंधुद्वीपश्च राजर्षिः, देवापिश्च महातपाः,
ब्राह्मण्यं लब्धवान् अत्र, विश्वामित्रो यथा मुनिः"। (,,शल्य०)
"पुत्रो गृत्समदस्याऽथ सुनको, यस्य सौनकः ;
ब्राह्मणाः, क्षत्रियाः चैव, वैश्याः, शूद्राः तथैव च ,
एतस्य वंशे संभूताः, विचित्राः कर्मभिः कृताः" ।(वा०पु०)
"बृहत्क्षत्रस्य सुहोत्रः; सुहोत्राद् हस्ती, यः इदं
हस्तिनापुरं आरोपयामास, अजमील-द्विमील-
पुरमीलाः त्रयो हस्तिनः तनयाः,अजमीलात् कण्वः ,
कण्वात् मेधातिथिः, यतः काण्वायनाः द्विजाः" ।(वि०पु०)
"एते क्षत्रप्रसूता वै पुनश्चांगिरसः स्मृताः ,
रथीतराणां प्रवराः, क्षत्रोपेता द्विजातयः" । ( ,, )

अन्यानि प्रमाणवाक्यानि

"एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः ,
देवो नारायणो नाऽन्यः, एकोऽग्निर्, वर्ण एव च" ।
"यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाऽभिव्यंजकं ,
यद्यन्यत्रापि दृश्येत, तत् तेनैव विनिर्दिशेत्" । (भा० स्कं० ९; ७)
"एक वर्णं इदं पूर्वं विश्वं आसीद्, युधिष्ठिर ,
क्रिया-कर्म-विभेदेन चातुर्वर्ण्यं प्रतिष्ठितं"। (म० भा० वन० अ० १८०)
"जातिः अत्र मनुष्यत्वे, महासर्प महामते ,
संकरात् सर्ववर्णानां दुष्परीक्ष्या-इति मे मतिः ;
इदं आर्षं प्रमाणं च 'ये यजामह' इत्यपि ;
तस्मात् शीलं प्रधानेष्टं विदुः, ये तत्त्वदर्शिनः" । (,,१८२)
"न योनिर्, नापि संस्कारो, न श्रुतं, न च संततिः ,

कारणानि द्विजत्वस्य, वृत्तं एव तु कारणं" । (,,३१३)
"जात्या न क्षत्रियः प्रोक्तः, क्षतात् त्राणं करोति यः,
चातुर्वर्ण्य-वहिष्ठोऽपि, स एव क्षत्रियः स्मृतः" ।(,,शांति०७२)
"शूद्रे चैतद् भवेल्लक्ष्म, द्विजे तच्च न विद्यते,
न वै शूद्रो भवेच् छूद्रो, ब्राह्मणो न च ब्राह्मणः" । (,,१८७)
न कुलेन, न जात्या वा, द्वाभ्यां वा ब्राह्मणो नहि ;
चांडालोऽपि व्रतस्थश्चेत्, ब्राह्मणः स युधिष्ठिर ;
एकवर्णमिदं सर्वं पूर्वं आसीद्, युधिष्ठिर,
क्रिया-कर्म-विभागेन चातुर्वर्ण्यं व्यवस्थितं ;
सर्वे वै योनिजाः मर्त्याः, समांसाः, सपुरीषकाः ;
शूद्रोऽपि शीलसंपन्नो गुणवान् ब्राह्मणो भवेत्,
ब्राह्मणोऽपि क्रियाहीनो शूद्रात् प्रत्यंतरं भवेत् ;
न जातिर्दृश्यते तावद्, गुणाः कल्याणकारकाः ;
जीवितं यस्य नाऽत्मार्थं, धर्मार्थं यस्य जीवितं,
अहोरात्रिं चरेत् क्षांतिं, तं नरं ब्राह्मणं विदुः ।"(,,अनु०)
"× नष्टेषु मधुना सार्धं कल्पवृक्षेषु वै, प्रजाः
स्वयंभुवं प्रभुं जग्मुः क्षुधाऽविष्टाः प्रजापतिं,
ब्रह्मा स्वयम्भूर्भगवान् × × दुदोह पृथिवीं इमां ;
(ओषध्यो जज्ञिरे तस्याः) ग्राम्यारण्यास्तु ताः पुनः ; ×
व्रीहयश्च यवाश्चैव गोधूमाश्च (तिलादयः) ×
उत्पन्नाः प्रथमाः ह्येताः आदौ त्रेतायुगस्य तु ; ×
ततः स तासां वृत्त्यर्थं वार्त्तोपायान् चकार ह,
ब्रह्मा स्वयंभूः भगवान् दृष्ट्वा सिद्धिं तु कर्मजाम् ;
संसिद्धायां तु वार्त्तायां, ततस्तासां स्वयंभुवः
मर्यादाः स्थापयामास यथाऽऽरब्धाः परस्परं ;
ये वै परिग्रहीतारः तासां आसन् (विधायकाः),

इतरेषां कृतत्राणाः, स्थापयामास क्षत्रियान् ;
उपतिष्ठंति ये तान् वै ( बोधयन्तश्च ) निर्भयाः ,
सत्यं ब्रह्म यथाभूतं ब्रुवंतो, ब्राह्मणाश्च ते ;
ये चाऽन्येऽपि-अबलाः तेषां वैश्यकर्मसु संस्थिताः ,
( कीटादीन् ) नाशयंति स्म पृथिव्यां प्राग् अतंद्रिताः ,
वैश्यान् एव तु तान् आहुः कीनाशान् वृत्तिसाधकान् ;
शोचन्तश्च द्रवन्तश्च, परिचर्यासु ये रताः ,
निस्तेजसोऽल्पवीर्याश्च शूद्रांस्तान् अब्रवीत्तु सः ।
शान्ताश्च, शुष्मिणश्चैव, कर्मिणो, दुःखिनस्तथा ;
तेषां कर्माणि धर्मांश्च ब्रह्मा तु व्यदधात् प्रभुः ,
संस्थितौ प्राकृतायां तु चातुर्वर्ण्यस्य सर्वशः ।
पुनः प्रजास्तु ताः मोहात् तान् धर्मान् नाऽन्वपालयन् ;
वर्णधर्मैर् अजीवंत्यो व्यरुध्यंत परस्परं ।
ब्रह्मा तमर्थं बुद्ध्वा तु याथातथ्येन वै प्रभुः ,
क्षत्रियाणां बलं दंडं युद्धं आजीवं आदिशत् ;
याजनाऽध्यापने चैव, तृतीयं च प्रतिग्रहं ,
विप्राणां; कृषि-गोरक्ष वाणिज्यं च विशां ददौ ;
शिल्पाऽजीवं भृतिं चैव शूद्राणां व्यदधात् प्रभुः ;
सामान्यानि तु कर्माणि ,ब्रह्मक्षत्रविशां पुनः ,
यजनाऽध्यापनं दानं,समानानि तु तेषु च"।(वायुपुराणे,पूर्वभागे,अ०८)
पुराणे तु भविष्येऽपि, ब्राह्मपर्वणि, विस्तरात्
अध्यायैः बहुभिश्चायं विषयः सुविचारितः ,
निर्णीता चाऽपि विस्पष्टं कर्मणैव हि वर्णता ;
कण्वाऽख्यानेन चैवापि पुराणेऽस्मिन् प्रदर्शितं ,
चातुर्वर्ण्यव्यवस्था हि नूतना विहिता यथा
'मिस्र' देशे च ऋषिणा, यत्र नाऽसीत् पुरा तु सा ।

भार्गवोऽपि-इमं एवाऽर्थं स्व-नीतौ वक्ति-असंशयं—
"न जात्या ब्राह्मणश्चात्र, क्षत्रियो, वैश्य एव वा,
न शूद्रो, न च वै म्लेच्छो; भेदिताः गुणकर्मभिः;
ब्रह्मणस्तु समुत्पन्नाः सर्वे ते किं न ब्राह्मणाः?
न वर्णतो, न जनकाद्, ब्राह्मं तेजः प्रपद्यते;
ज्ञान-कर्मो-पासनाभिः देवताऽऽराधने रतः,
शांतो दांतो दयालुश्च ब्राह्मणस्तु गुणैः कृतः;
लोकसंरक्षणे दक्षः शूरो दान्तः पराक्रमी,
दुष्टनिग्रहशीलो यः स वै क्षत्रिय उच्यते;
क्रयविक्रयकुशलाः ये नित्यं पण्यजीविनः,
पशुरक्षाः, कृषिकराः, ते वैश्याः कीर्त्तिताः भुवि;
द्विजसेवाऽर्चनरताः शूराः शांताः जितेन्द्रियाः,
सीरकाष्ठतृणवहाः ते नम्राः शूद्रसंज्ञकाः;
त्यक्तस्वधर्माऽचरणाः निर्घृणाः परपीडकाः
चंडाश्च हिंसकाः नित्यं म्लेच्छास्ते ह्यविवेकिनः(शु० नी० अ० १)
'ब्रह्म(ा)'-शब्दस्तु बह्वर्थः स्मर्त्तव्योऽयं, यथा 'मनुः';
(१) 'महत्तत्त्वं, बुद्धितत्वं', यज् जगद्व्यापकं सदा,
धाता विधाता सर्वेषां नियमानां जगद्गतेः;
महतो यो रजोंऽशोऽस्ति, स 'ब्रह्मा' च विशेषतः;
महत्तत्त्वस्य सत्त्वांशो विष्णुरित्यभिधीयते;
तमोंऽशश्च महेशोऽस्ति, पुराणपरिभाषया;
तत्तद्गुणाभिमानेन, देवजीवास्तथैव, च;
(२) गुरुः, वृद्धतमो, मान्यो, 'मनो'रपि च यः 'पिता',
'पितामह'श्च सर्वेषां, आपत्सु-उपदेशकः परः;
(३) सर्वेषु 'यज्ञ' कृत्येषु 'ऋत्विङ्-मुख्यो, निरीक्षकः;
'यज्ञ'श्च सर्वं कार्यं तद् यल् लोकस्योपकारकं;

एते त्रयः प्रधानाऽर्थाः, 'ब्रह्म(ा)'-शब्दस्य हि स्मृताः ।
"मनो, महान्, मतिः,ब्रह्मा, पूर्वुः,बुद्धिः,ख्यातिः,ईश्वरः,
प्रज्ञा, चितिः, स्मृतिः, संविद्, विपुरं(लं), चोच्यते बुधैः । ×
तत्त्वानां अग्रजो यस्मान्, महांश्च परिमाणतः
शेषेभ्योऽपि गुणेभ्योऽसौ, महान्-इति ततः स्मृतः ; ×
वृहत्त्वाद्, बृंहणत्वाच्च भावानां सलिलाश्रयात्,
यस्माद् वृंहयते भावान्, 'ब्रह्मा' तेन निरुच्यते ; ×
बुध्यते पुरुषश्चात्र सर्वभावान् हिताऽहितान्,
यस्माद् बोधयते चैव तेन बुद्धिर्निरुच्यते ; ×
वर्त्तमानानि-अतीतानि तथाऽनागतानि च,
स्मरते सर्वकार्याणि तेनाऽसौ स्मृतिरुच्यते ; ×
यस्मात् पुरि-अनुशेते च तस्मात् पुरुष उच्यते ; ×
पर्यायवाचकैः शब्दैः तत्त्वं आद्यं, तु गीयते ।"(वायु०पु०अ०४)
"कूटस्थो योऽक्षरोऽव्यक्तो हि,-अंतरात्मा, सनातनः,
स सिसृक्षुः सहस्रांशाद् असृजत् पुरुषं प्रभुं,
'मानसो' नाम यः पूर्वो विश्रुतो वै महर्षिभिः ; ×
मानसस्य-इह या मूर्त्तिः 'ब्रह्म(ा)'त्वं समुपागता,
तस्यासनविधानाऽर्थं पृथिवी पद्मं उच्यते ; ×
तस्मात् पद्मात् समभवद् 'ब्रह्मा' वेदमयो निधिः,
'अहंकार' इति ख्यातः सर्वभूताऽत्मभूतकृत्"; × (म०भा०शां०१८०)
"महानात्मा, मतिः, विष्णुः, जिष्णुः शंभुश्च वीर्यवान्,
बुद्धिः,प्रज्ञा,-उपलब्धिश्च, तथा ख्यातिः, धृतिः, स्मृतिः,
पर्यायवाचकैः शब्दैः महानाऽत्मा विभाव्यते ।" (अनुगी०)
"वर्णांतरगमनमुत्कर्षापकर्षाभ्यां सप्तमे पंचमे वा ।"(गौतमस्मृ०)
अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णं आपद्यते
जातिपरिवृत्तौ; धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं ।"(आपस्तंबसू०)

'जन्मवर्णाग्रहस्य दारुणः परिणामः

यत् त्रयोऽपि द्विजाः भ्रष्टाः स्वधर्मात् प्रायशोऽधुना,
शिक्षकाः वंचकाः जाताः, रक्षकाश्चापि भक्षकाः,
पोषकाः मोपकाश्चैव, सेवकाश्चापि धर्षकाः,
'जन्मनैव हि वर्णस्य' सर्वं विलसितं त्विदं।
'जन्मनैव हि वर्णश्' चेद्, अलं कृत्यैर् अपार्थकैः;
"कृतकृत्याः सर्ववर्णाः यदि वृत्तं न पश्यति"।(म०भा०)
जन्मनैव हि सिद्धः सन्, 'क्षत्रियो,' 'ब्राह्मणो' ऽथवा,
रक्षा-शौर्यं स्वकं कृत्यं, तपोविद्याऽत्मकं नु वा,
'स्वधर्मा'ऽख्यं अकृत्वाऽपि 'स्वोच्चवर्णात्' न हास्यते,
पूजां कृत्योचितां चापि कृत्याऽभावेऽपि लप्स्यते;
एवं विगतभीर् दृप्तः कर्त्तव्यं स्वं प्रहास्यति;
जिघृक्षिष्यति सर्वेषां अधिकारांश्च मत्तधीः।
सर्वो दंडभिया लोकः स्वं स्वं कृत्यं करोति हि;
"सर्वो दंडजितो लोको; दुर्लभो हि शुचिर्नरः;
दंडस्य हि भयात् सर्वं जगत्" कृत्येऽधितिष्ठते।(म०)
"भयाद् एवाऽग्निस्तपति, भयात् तपति सूर्यः।
भयाद् इन्द्रश्च वायुश्च मृत्युर्धावति पंचमः" (उ०)
"ब्राह्मणो नाऽवमंतव्यः सद्-असद्-वा समाचरन्,"
"न जातु ब्राह्मणं हन्यात् सर्वपापेषु-अवस्थितं";
"अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः";
"बालोऽपि नाऽवमंतव्यो मनुष्य इति भूमिपः;
महती देवता ह्येषा नररूपेण तिष्ठति";
'सर्वेषां देवमुख्यानां अंशैरंशैर् विनिर्मितः;
सद्-असद् वा नृपः कुर्यात्, सर्वं सह्यं जनैस्तु तत्'—
उद्धरंतीदृशान् श्लोकान् यत् केचन जना ननु,

तद् दंडस्याऽपराधानां वञ्चनायैव केवलं।
प्रक्षिप्ताश्चेदृशाः श्लोकाः स्वार्थसाधनतत्परैः,
असत् समाचरद्भिश्च नूनं, इत्यनुमीयते।
नहि सद्ब्राह्मणः कश्चित्, सर्वलोकहिते रतः,
पुण्यकारी, सदाचारी, ब्रह्म-धर्म-चरः सदा,
सत्यं ब्राह्मणशब्दार्हः, वक्तुं एवं इहाऽर्हति।
न प्रजावत्सलो वाऽपि राजा, प्रकृतिरञ्जकः,
धर्मदंडधरो, न्यायकरो, निष्पक्षमानसः,
एवं क्रूरं अधर्मं च वक्तुमर्हति कर्हिचित्,
येन वृद्धिस्तु पापानां भवेद् भूयोऽपि पापिनां।
मिथ्याश्लोकास्तथैव-इमे विरुध्यंते मनूक्तिभिः।
नैवाऽसौ 'ब्राह्मणो' यः स्यात् "सर्वपापेष्वपि स्थितः";
असत् समाचरेद् यस्तु स कथं 'ब्राह्मणो' भवेत्?
"योऽनधीत्य द्विजो वेदं अन्यत्र कुरुते श्रमं,
स जीवन्नेव शूद्रत्वं आशु गच्छति साऽन्वयः।
न तिष्ठति तु यः पूर्वां (संध्यां), नोपास्ते यश्च पश्चिमां,
स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः"; (म०)
नैतद् घोरतमं पापं, वेदाऽनध्ययनं तु यत्,
सर्वपापसमं नाऽपि संध्योपासनवर्जनं,
शूद्रत्वाऽप्तिस् तु तत्रापि दंडो हि मनुना धृतः;
ब्राह्मण्यं अवशिष्येत सर्वपापस्थितौ कथं?
"ये वकव्रतिनो विप्राः, ये च मार्जारलिंगिनः,
न वारि-अपि प्रयच्छेत् तान्, वाङ्मात्रेणाऽपि नाऽर्चयेत्।
गुरुं वा वालवृद्धौ वा, ब्राह्मणं वा वहुश्रुतं,
आततायिनं आयान्तं हन्याद् एवाऽविचारयन्;
(अग्निदो, गरदश्चापि, शस्त्रोन्मत्तो, धनापहः,

क्षेत्रदारहरश्चापि, षड् भवंति-आततायिनः; (शु०नी०)
दंडो हि सुमहत्तेजो, दुर्धरश्चाऽकृतात्मभिः,
धर्माद् विचलितं हंति नृपमेव सबांधवं;
दुष्येयुः सर्ववर्णाश्च, भिद्येरन् सर्वसेतवः,
सर्वलोकप्रकोपश्च भवेद्, दंडस्य विभ्रमात्;
तं राजा प्रणयन् सम्यक्, त्रिवर्गेणाऽभिवर्धते;
कामाऽत्मा विषमः क्षुद्रो दंडेनैव निहन्यते;
अदंड्यान् दंडयन् राजा, दंड्यांश्चैवाऽप्यदंडयन्,
अयशो महद् आप्नोति, नरकं चाऽधिगच्छति"। (म०)
आशयाश्च, तथाऽऽज्ञाश्च, पुण्याः एवंविधाः मनोः;
क्षिप्तश्लोकाऽशयान् नाऽयं भगवान् वक्तुमर्हति।
स्वयं भीष्ममुखाद् व्यासः प्रशास्त्येवं युधिष्ठिरं—
"पुत्रवच्च प्रजाः स्वाश्च भृत्यांश्च परिपालय,
योगः क्षेमश्च ते नित्यं ब्राह्मणेषु-अस्तु भारत;
अनर्थो ब्राह्मणस्य-एष यद् वित्तनिचयो महान्;
श्रिया हि-अभीक्ष्णं संवासो दर्पयेत् संप्रमोहयेत्;
ब्राह्मणेषु प्रमूढेषु धर्मो विप्रणशेद् ध्रुवं;
धर्मप्रणाशे भूतानां अभावः स्यान्, न संशयः।
धिक् तस्य जीवितं राज्ञो, राष्ट्रे यस्याऽवसीदति
द्विजो वा,ऽन्यो मनुष्यो वा; शिबिर् आह वचो यथा;
यस्य स विषये राज्ञः स्नातकः सीदति क्षुधा,
अवृद्धिं एति तद्राष्ट्रं, विंदते 'सहराजकं',
(समूहीभूय राजानः तद् अन्ये ऽभिद्रवंति वै,
प्रजाकोपाद् विप्लवं च विन्दते 'तद्-हि-अराजकं')।
क्रोशंत्यो यस्य वै राष्ट्राद् ह्रियंते तरसा स्त्रियः,
क्रोशतां पतिपुत्राणां, मृतोऽसौ, न-स जीवति;

अरक्षितारं हर्त्तारं विलोप्तारं अनायकं
तं वै राजकलिं हन्युः प्रजाः सन्नह्य निर्घृणं ;
अहं वो रक्षिता-इत्युक्त्वा, यो न रक्षति भूमिपः ,
स संहत्य निहंतव्यः श्वा-इव सोन्मादः आतुरः ।
पापं कुर्वंति यत् किंचित् प्रजाः राज्ञा हि-अरक्षिताः ,
चतुर्थं तस्य पापस्य राजा विन्दति भारत ।"
(म० भा० अनु० अ० ९६)

वहवश्चापि राजानः उद्दंडाः दंडिताः भृशं ,
प्रजा पीडाकरा ये हि, पूर्वकाले महर्षिभिः ।
"वेनो विनष्टोऽविनयान्, नहुषश्च नराधिपः ।" (म०)
अर्वाचीनेतिहासेऽपि दुष्टाः शिष्टैर्हताः नृपाः
वहवो, वहुदेशेषु; नाऽधर्मो निष्फलो भवेत् ।
तृतीयस्य द्विजस्यापि वैश्यस्य विषये स्मृतं
धनाऽतिगृध्नुः, कृपणः, पात्रेभ्यो न ददाति यः ,
जनताहितकार्यार्थं, धनं तस्य हरेन् नृपः ;
"यो वैश्यः स्याद् वहुपशुर्, हीनक्रतुर् असोमपः ,
कुटुम्वात् तस्य तद्द्रव्यं आहरेद् यज्ञसिद्धये ;
आदाननित्याच् च-अदातुर् आहरेद् अप्रयच्छतः :
योऽनाहिताग्निः शतगुः, अयज्वा च सहस्रगुः ,
तयोरपि कुटुम्वाभ्यां आहरेद् अविचारयन् ।" (म०)

अथवा, यदि न क्षिप्ताः श्लोकास्ते, तर्हि तेऽन्यथा
व्याख्येयाः स्युः, प्रसंगानां अवस्थानां विवेकतः ;
"देशकालनिमित्तानां भेदैर्धर्मो विभिद्यते ;
अन्यो धर्मः समस्थस्य, विषमस्थस्य चाऽपरः ;
न हि सर्वहितः कश्चिद् आचारः सम्प्रवर्त्तते ;

तस्माद् अन्यः प्रभवति; सोऽपरं बाधते पुनः ;
आचाराणां अनैकाग्र्यं तस्मात् सर्वत्र दृश्यते ; ×
नहि-एव-एकांतिको धर्मो; धर्मस्तु-आवस्थिकः स्मृतः ।"
(म० भा० शां०)

कस्मिंश्चिद् अपि पूर्वस्मिन् काले, ऽन्याऽन्यपरिस्थितौ ,
भवेयुर् उचितास्तादृक्श्लोकाः; नैवाऽद्य ते तथा ।
समये समयेऽतो हि स्मृतयोऽपि नवाः नवाः ,
आदिस्मृतेर्मनोर् एव कृताः संकोचविस्तरैः
अंशानां; न तु मूलोऽयं सिद्धान्तः परिवर्त्तितः ,
वर्णाश्रमात्मको यस्तु, "गुण-कर्म-विभागशः ;"
स्वभावात् तु गुणः, तस्मात् कर्म, वर्णः ततः स्मृतः ।

गुण-कर्म वर्ण-सिद्धान्त-सत्फलं; गुणभेदकारणं

कर्मणा यदि वर्णः स्याद्, वृत्तं दृष्ट्वा विवेकतः ,
कर्माणि प्रविभंक्ष्यंते "स्वभावप्रभवैर्गुणैः ;
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लप्स्यते जनः ;
स्वधर्मे निधनं श्रेयः, पर-धर्मो भयावहः" । (गी०)
स्वधर्मो हि स्व-कर्माऽस्ति, स्वभावज-गुणो-त्थितं ;
स्व-भावः प्रकृतिस्; तज्जाः गुणाः सत्त्वं-रजस्-तमः ;
अवस्थाभेदतोऽन्योन्यं जनयंत्यपि ते गुणाः ,
परस्परं चाऽश्रयंति, तथैवाऽभिभवंत्यपि ;
संयोगश्च सदा तेषां, न पार्थक्यं कदाचन । (सां०का०;गी०)
एकयोरेव दम्पत्योर् अतस्तु विविधाः प्रजाः
प्रत्यक्षमेव दृश्यंते; शास्त्ररोधोऽत्र नाऽर्थवान् ।
"न नामाऽनुपपन्नं हि प्रत्यक्षे" किंचिद् इष्यते ;
"प्रमाणानि च प्रत्यक्षपराणि"-अत्र न संशयः ;

"प्रमितिः प्रत्यक्षपरा"-इत्यादि वै सर्वसंमतं ;(न्या०)
"न श्रुतीनां शतमपि घटं पटयितुं क्षमं" ।(भामती)
एकपित्रोर्भिन्नगुणाः प्रजायन्ते सुतास्तु यत्,
तत्र हेतुं समाख्याति ज्योतिषं, वैद्यकं, तथा,
सर्वज्ञानमयश्चापि स्वयं हि भगवान्मनुः ;
गर्भाधानमुहूर्त्तस्य प्रभावस्तत्र कारणं,
शारीरमानसावस्थाभेदाः पित्रोस्ततो यतः ;
"शुक्रशोणितसंयोगे, यो भवेद् दोषः उत्कटः,
प्रकृतिर्जायते तेन", चेति सुश्रुतशासनं । (सु०)
सुश्रुते चरके चैव वह्व्यः प्रकृतयः स्मृताः,
पित्तवातकफानां याः मात्राणां भेदतः कृताः ;
सात्त्विकाः सप्त, षट् तत्र राजसास्, तिस्र एव तु
तामसाः वर्णिताः; किंतु "प्रोक्ता लक्षणतो," नहि
सर्वाः शक्याः प्रसंख्यातुं; प्राधान्येनैव लक्षणं ;
"महाप्रकृतयस्त्वेताः रजस्सत्त्वतमःकृताः" ; (सु०)
"ब्राह्मादिषु विवाहेषु" सात्त्विकेषु-"अनुपूर्वशः,
ब्रह्मवर्चस्विनः पुत्राः जायंते 'शिष्टसम्मताः" ;
रजस्तमःप्रधानेषु "नृशंसाऽनृतवादिनः
जायंते दुर्विवाहेषु ब्रह्म-धर्म-द्विषः सुताः ;
अनिन्दितैः विवाहैः तैः अनिंद्या भवति प्रजा,
निन्दितैर्निन्दिता नृणां; तस्मान् निंद्यान् विवर्जयेत्"। (म०)
संगमे सात्त्विके नूनं सात्त्विकी भवति प्रजा ;
रजस्तमोऽधिके तद्वद् राजसी तामसी तथा ;
स्त्रीपुंसयोः यथा भावो मिश्रणे स्यात् शरीरयोः,
उत्पद्यते नवो देहः तादृग्भावेन भावितः ।
दृश्यते जन्मपत्रेषु बालकानां अनेकशः

कुलख्यातेः विभिन्नस्य वर्णस्य खलु निश्चितिः ।
"सत्त्वाधिको ब्राह्मणः स्यात्, क्षत्रियस्तु रजोऽधिकः,
तमोऽधिको भवेद् वैश्यः, गुणसाम्यात्तु शूद्रता" ;(म०भा०)
"सद्गुणो ब्राह्मणो वर्णः, क्षत्रियस्तु रजोगुणः,
तमोगुणस्तथा वैश्यः, गुणसाम्यात्तु शूद्रता"। (भविष्य पु० ३,४,२३)
सत्त्वविद्धं रजश्चापि, सत्त्वविद्धं तमस्तथा,
द्विजत्वमुत्पादयति क्षत्रिये, विशि चैव, हि ;
रजसः तमसो विद्धं एवं चैवाऽल्पमात्रया,
द्विजत्वमुत्पादयति गुणः सत्त्वं हि ब्राह्मणे ।
विस्मर्त्तव्यं कदाचित्तु न-एतत्—त्रिषु गुणेष्वपि,
नैकः कश्चित् स्वरूपेणाऽस्ति-उत्तमो-ऽधम एव वा ;
अवस्थाभेदतश्चापि, प्रयोगस्य च भेदतः,
यः कोऽपि दूषणं कुर्यात्, यः कोऽपि ननु भूषणं ;
रजोऽधिकः स्मृतो ब्रह्मा, विष्णुः सत्त्वाधिकः स्मृतः,
तमोऽधिकः शिवश्चापि; त्रयश्चापि महेश्वराः ;
"सत्त्वं ज्ञानं, रजः कर्म, तमः" इच्छा तु-"इहोच्यते" । (म०)
एकयोरेव पित्रोस्तु जायंते विविधाः प्रजाः,
चत्वारोऽपि यथा वर्णाः गिराद्रुहिणयोर्ननु ;
रजोऽधिकाः, तमःप्रायाः, चाऽपि सत्त्ववतोः प्रजाः ;
एवं सत्त्वाधिकाश्च-एवाऽन्ययोरपि, क्वचित् क्वचित् ।
"अमैथुनाः प्रजाः पूर्वं; न ताः ववृधिरे; तदा
मैथुन्यं असृजद् ब्रह्मा; प्रजाः ववृधिरे ततः",
वैचित्र्यं चाभवत् तासां"—पुराणेष्विति पठ्यते ।
यत्र न व्यभिचारस्य शंका काचिन् मनाग् अपि,
पतिः पत्नीव्रतो यत्र, पत्नी चापि पतिव्रता,
परस्परं भृशं रक्तौ, परस्परं-अनुव्रतौ ;

तत्राऽपि भावभेदेन, संगे संगे, ऋतौ-ऋतौ,
जायंते-एव प्रत्यक्षं भिन्नप्रकृतयः सुताः;
केचित्तु सदृशाः मातुः, केचित्तु सदृशाः पितुः,
(यतो गाथा प्रवृत्ता-इयं, "पुत्रो मातृमुखः शुभः,
तथा पितृमुखी कन्या"; प्रेमाऽधिक्यस्य सूचनात्;)
उभयोर्विंदृशाः केचित्, विदृशाश्च परस्परं।

कामशास्त्रस्य अंश.

अन्यच्च वर्त्तते हेतुर् वैदृश्ये पित्रपत्ययोः।
बहु-अन्यशास्त्रवद् भ्रष्टं कामशास्त्रं; ततोऽधिकं
अपि; यत् पाशवं जातं कोकशास्त्रायतेऽधुना।
गार्हस्थ्यस्य हि तच्छास्त्रं, दाम्पत्यस्योत्तमस्य च,
चतुःषष्टिकलानां च, गृहोपकरणस्य च,
उद्यानानां कृषीणां च, सख्यस्याऽर्थस्य चैव हि
सौन्दर्यस्याऽगदत्वस्य स्त्रियाः पुंसः तथैव च,
उत्कृष्टसन्ततेश्चापि, रति-प्रीति-विवर्धकं;
तत् शिष्यतेऽधुना नूनं मैथुनायैव केवलं,
पशूनां अनुकारेण शास्ति चित्ररतानि च,
चत्वारि चाऽपि-अशीतिश्च, योगासनविवर्त्ततः।
ईदृशाद् अनुकारात् तु पशूनां, खलु, संगमे,
भावोऽपि तादृशो भावी, तादृशी च प्रजा ध्रुवं।
अत एव हि दृश्यंते बहवः पशुवज् जनाः,
कुबुद्धयः कुरूपाश्चाऽपि,-अथ किं, पशुवन्मुखाः,
कामक्रोधभयाऽमर्षतर्षमोहमदैर्भृताः,
राजसास्तामसाश्चापि; सात्त्विकास्तु क्वचित् क्वचित्।
काम-शास्त्रीय-कामस्तु केवलं नहि मैथुनं;

ज्ञानेन्द्रियाणां पंचानां विषयाः ये परिष्कृताः,
ललिताऽस्वादनं तेषां कामः सर्वोऽपि सात्त्विकः;
सूर्योदयाऽस्तौ, सरितः, "आपो ज्योती रसोऽमृतं", (वे०)
महीधराणां माहात्म्यं आश्चर्यं गौरवं गुरु,
शोभा समुद्रवेलायाः, ताराऽच्छन्नं नभो महत्,
पुष्पोद्गमो वसन्ते च, वृक्षाः बहुफलाऽनताः,
साम-गानं विहंगानां उषःकाले मधुस्वनं,
शीत-मन्द-सुगन्धस्य समीरस्य निषेवणं,
पानं 'अमृतवर्षस्य' मूहूर्त्तैकं तदैव हि—
एतेषां रसनं सर्वं उत्कृष्टः काम एव हि।
प्रकृतेः सुषमा संध्याकाले पुण्ये विलोक्यते,
या-ऊर्जस्वलं विराड्रूपं ऐशं परमभास्वरं—
तारकाः चिति'भस्मा'ऽस्मिन्; व्योम श्यामं 'गजाजिनं';
आकाशगंगा 'गंगे'व; 'भाले' प्रत्यक्षचंद्रमाः;
'भुजगाः' वेष्टितास्तत्र ग्रहनक्षत्रतारकाः
खेऽटाः, येषां भ्रमिश्चापि नित्यं कुंडलिनीगतिः;
चंद्रतारामयी ज्योत्स्ना रात्र्यां, भास्करभाः दिने,
सर्वप्राणमयी 'देवी' शक्तिरर्धांगिनी सदा,
सर्वेषां 'ब्रह्मणो-अंडानां' सवित्री 'भ्रामयित्री'-अपि,
माया चाऽप्यात्मनोऽज्ञानां जीवानां 'भ्रम'कारिणी।
''उत त्वः पश्यन् न ददर्श वाचं,
उत त्वः शृण्वन् न शृणोषि एनां,
उतो त्वस्मै तन्वं विसस्रे
जायेव पत्य उशती सुवासाः।
चित्रं देवानां उदगाद् अनीकं
चक्षुर्मित्रस्य वरुणस्याऽग्नेः,

आ प्रा द्यावापृथिवी अंतरिक्षं,
सूर्य आत्मा जगतस्तस्थुषश्च ।
विश्वाहा त्वा सुमनसः सुचक्षसः,
प्रजावंतो अनमीवा अनागसः,
उद्यंतं त्वां मित्रमहो दिवेदिवे
ज्योग्जीवाः प्रतिपश्येम सूर्य" । (वे०)
"विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसां,
यत्रेदं दृश्यते विश्वं भूतं भव्यं भवच्च सत् ;
द्यौर् अक्षिणी, चक्षुर् अभूत् पतंगः, पक्ष्माणि विष्णोर् अहनी उभे च, ×
ह्रासो जनोन्मादकरी च माया, दुरंतसर्गो यद्अपांगमोक्षः,
व्रीड़ा-उत्तरोष्ठो,ऽधर एव लोभो, धर्मः स्तनो, ऽधर्मपथोऽस्य पृष्ठं, ×
घ्राणोऽस्य गंधो, मुखंअग्निरिद्धो, × कुक्षिः समुद्रो, गिरयोऽस्थिसंघाः,
नद्यो ऽस्य नाड्यो, ऽथ तनूरुहाणि महीरुहाः विश्वतनोर्, नृपेन्द्र,
अनंतवीर्यः श्वसनं मातरिश्वा, गतिर्वयः कर्मगुणप्रवाहः,
ईशस्य केशान् विदुर् अंबुवाहान्, वासस्तु संध्यां, कुरुवर्य, भूम्नः" । ×
(भा०)

सर्वं एतत्तु कामस्य 'सामान्यो' विषयः स्मृतः
मनः षष्ठेन्द्रियाणां हि; 'विशेषो', मैथुनं तथा ;
वेदाः वदन्ति पुरुषं सर्वं काममयं किल ;
'मायायाः' एव नाम-एतद् अपरं 'काम' इत्यपि ;
"पंचेन्द्रियाणां, मनसा ऽधिष्ठितानां, स्वके स्वके
विषये हि-अनुकूला या प्रवृत्तिः, काम एव सा;
आभिमानिकरूपेण याऽनुविद्धा सुखेन तु
विशेषे स्पर्शविषये प्रतीतिः, फलवत्यपि,
प्राधान्याद् अथ वैशेष्यात् सा 'काम' इति कथ्यते" । (वा०कामसू०)
"कामात्मता न प्रशस्ता, न चैवेहास्ति-अकामता,

यद्यद् हि कुरुते किंचित् तत्तत् कामस्य चेष्टितं ;
काम्यो हि वेदाऽधिगमः, कर्मयोगश्च वैदिकः ;
अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्" ; (म०)
धर्मकामाः, अर्थकामाः, कामकामास्तथैव च,
अथ किं, मोक्षकामाश्चा,ऽप्यार्षग्रन्थेषु वर्णिताः ;
"धर्माऽनपेतः कामोऽस्मि भूतानां भरतर्षभ" । (गी०)
सायं प्रातर् द्विजातीनां संध्योपासनमस्ति यत्,
जलाशयसमीपे च, तत् कामोत्तमसाधनं ;
( ज्योतिषोऽपां च संसर्गे "आपोज्योती रसो ऽमृतं" ; )
कियद्भिः क्रियते संप्रति,-एतदुद्देश्यतश्च, तत् ?
ईदृशी कामशास्त्रस्य दुर्दशा दृश्यते ऽधुना ;
धर्मा-र्थ-मोक्षशास्त्राणां विकृतिश्चापि तादृशी ।

## धर्मशास्त्रदुर्दशा

बाह्याऽडंबरमात्रो हि 'धर्मो'ऽद्यत्वे ऽवशिष्यते,
वर्णितं हि यथा पूर्वं, 'दंभा-ऽहंकार'-चित्रणे ।
'मुच्यते सर्वपापेभ्यो गंगास्नानेन केवलं' ;
'जपमात्रं हरेर्नाम्नः सर्वपापनिकृंतनं' ;
'अपि ब्राह्मणनामभ्यो दानं, एकं, कलौ युगे,
सर्वपापाऽपनोदाय सर्वथैवाऽलं इष्यते' ;
'ऊर्ध्वपुंड्र-त्रिपुंड्रादि-तीर्थमृद्-भस्मधारणैः,
रुद्राक्ष-तुलसीकाष्ठ-मालानां परिवर्त्तनैः,
प्रणामैर्वाऽपि साष्टांगैः मूर्त्यग्रे, तीर्थमज्जनैः,
नितान्तमलयुक्तानां च तथाऽऽचमनैरपि
'तीर्थ' नामककुंडादिजलानां उग्रगन्धिनां,
(आचामंति स्वयं नैव यानि तीर्थपुरोहिताः),

केवलं श्रद्धया भक्त्या—सर्वपापैः प्रमुच्यते ;
'पिपीलिकाविलान्तश्च शर्कराक्षेपणैस्तथा ,
सर्पाणां पूजनैः, तेभ्यो दुग्धदानैस्तथैव च ,
पालनैर्वानरादीनां भोजनैः पूजनैरपि ,
वृक्षाणां अश्मकूटानां परिक्रमणवन्दनैः ,
भूतप्रेतनिविघ्नानां वस्तूनां अपि चाऽर्हणैः ,
ईदृशैः कर्मभिश्चान्यैः, पुण्यं तु वहु लभ्यते'—
इत्यादि भावाः प्रचुरं देशेऽस्मिंस्तु प्रचारिताः
कुटिलैः, सरलैश्चापि, विपत्तीनां तु हेतवः ।
सरलाः विप्रलभ्यंते एवं तु कुटिलैर्भृशं ;
प्रतारिताश्च सरलाः नयंति-अन्यांश्च तत्पथे ।
अन्यथा चाऽपि तैर्भावैः क्रियते पापवर्धनं ;
सर्वपापनिवृत्तिश्चेत् स्नानाद्यैरेव केवलं ,
कस्माज् जनो न कुर्याद् हि पापं यत् सुखदायकं ?
नैतादृशो महर्षीणां आशयस्तु कदाचन ।
"श्रूयतां धर्मसर्वस्वं, श्रुत्वा चैवाऽवधार्यतां ,
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ;
यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ,
न तत्परेषु कुर्वीत जानन् अप्रियं आत्मनः ,
अपत्रपेत वा येन न तत् कुर्यात् कथंचन ,
यद्यद् आत्मनः इच्छेत तत्परस्यापि चिंतयेत्";(म०,भ०भा०)
"धृतिः क्षमा दमोऽस्तेयं शौचं इंद्रियनिग्रहः
धीः विद्या सत्यं अक्रोधो, दशकं धर्मलक्षणं ;
अहिंसा सत्यं अस्तेयं शौचं इंद्रियनिग्रहः ,
एतं सामासिकं धर्मं चातुर्वर्ण्ये ऽब्रवीन् मनुः" ; (म०)
"आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ,

सुखं वा यदि वा दुःखं, स योगी परमो मतः" ; (गी०)
"तीर्थस्नानैः तपोभिर्वा भावदुष्टो न शुध्यति ;
श्व-दृतिः क्षालिता तीर्थे किं शुद्धि अधिगच्छति ?
गंगादितीर्थेषु वसंति मत्स्याः, देवालये पक्षिगणाश्च नित्यं,
भावोज्झितास्ते न फलं लभंते, तीर्थावगाहाच्च तथैव दानात्"(शि०पु०)
"ईश्वरैरपि भोक्तव्यं कृतं कर्म शुभाशुभं",
"प्रारब्धानां कर्मणां तु भोगादेव क्षयो भवेत्";
"यमो वैवस्वतो देवो, यः तव-एष हृदि स्थितः,
तेन चेद् अविवादः ते, मा गंगां मा कुरुन् गमः" । (म०;म०भा०)
"अप्सु देवाः मनुष्याणां, दिवि देवाः मनीषिण ,
बालानां काष्ठलोष्ट्रेषु, बुधस्याऽत्मनि देवता ;
शिवं आत्मनि पश्यंति, प्रतिमासु न योगिनः ;
आत्मस्थं ये न पश्यंति, तीर्थे मार्गन्ति ते शिवं ;
उत्तमा सहजाऽवस्था, द्वितीया ध्यान-धारणा ,
तृतीया प्रतिमापूजा, होमयात्रा ततोऽधमा" ।(अग्निपु०)
नूनं मृत्क्रीडनेषु-एव बालस्याऽस्ति मनोगतिः,
न ग्रंथेषु-अधिकारोऽस्ति; "धर्मो ह्यावस्थिकः स्मृतः";(म०भा०)
किंतु सत्पितरौ नैवं इच्छतो—'नौ सुतः सदा
बाल एव भवेन्, नैव-आमृत्यु वर्धेत विद्यया' ।
"माता शत्रुः पिता वैरी येन बालो न पाठ्यते",
काष्ठलोष्ट्रेषु-एव सक्तः क्रियते चाऽधिकाऽधिकं,
यथाऽद्य जनता भाग्यहीने देशे तु याजकैः ।
नूनं स्नाने गुणाः संति देहशुद्ध्यादिकाः बहु ;
यात्रासु-अपि तथा ज्ञान-वृद्धिर्, देशाऽटनैः कृता,
पुर-ग्राम-नदा-ऽरण्य-पर्वत-उदधि-दर्शनैः,
विविधानां मनुष्याणां चर्याणां चाऽवलोकनैः,

संस्कारश्चापि चित्तस्य विकासश्च विनोदनं ;
अर्चायाः 'दिवि-देवानां' व्याजेन स्याच्च शिक्षणं
ज्योतिःशास्त्रस्य तत्त्वानां, ग्रहणाऽवसरेषु च ;
देवालयानां मूर्त्तीनां—स्वच्छाश्चेत् स्युश्च शोभनाः—
कला कुशलताऽऽस्वादो, ह्लादो, विस्मयः, एव च ;
सदभ्यासेन चैवाऽपि धारणा-ध्यान-योग्यता,
महती बुद्धिशुद्धिश्च, ख्यायेत यदि मंदिरे,
रूपकाणां पुराणेषु वर्णितानां पदे पदे,
प्रतीकानां च, गूढार्थौ—यथोक्तं ऋषिभिः पुरा—
" 'कौस्तुभ'व्यपदेशेन स्वात्मज्योतिः बिभर्त्ति-अजः,
तत्प्रभा व्यापिनी साक्षात् 'श्रीवत्सं' उरसा विभुः ;
स्व-मायां 'वनमाला'ऽख्यां नानागुणमयी दधत् ;
'वासः' छन्दोमयं 'पीतं;' 'ब्रह्मसूत्रं' त्रिवृत्-स्वरं ;
बिभर्त्ति सांख्यं योगं च देवो 'मकरकुंडले' ;
'मौलिं' पदं पारमेष्ठ्यं सर्वलोकाऽभयंकरं ;
अव्याकृतं 'अनंताख्यं आसनं' यदधिष्ठितः
धर्मज्ञानादिभिः युक्तं सत्त्वं 'पद्मं' इह-उच्यते ;
ओजः-सहो-बल-युतं मुख्यतत्त्वं 'गदां' दधत् ;
अपां तत्त्वं 'दरवरं;' तेजस्तत्त्वं 'सुदर्शनं',
नभोनिभं नभस्तत्त्वं 'असिं,' 'चर्म' तपोमयं ;
कालरूपं 'धनुः शार्ङ्गं;' तथा कर्ममय-'इषुधिं' ;
इन्द्रियाणि 'शरान्' आहुः; आकूतीः अस्य 'स्यन्दनं' ;
तन्मात्राणि-अस्याऽभिव्यक्तिं;' 'मुद्रया'ऽर्थक्रियाऽत्मतां ;
'मंडलं' देवयजनं दीक्षासंस्कारः आत्मनः ;
'परिचर्या' भगवतः आत्मनो दुरितक्षयः ;
भगवान् भगशब्दार्थं 'लीलाकमलं' उद्वहन् ;

धर्मं यशश्च भगवान् 'चामरव्यजने' ऽभजत् ;
'आतपत्रं' तु वैकुंठं; 'द्विजाः' (दन्ताः) धाम-अकुतोभयं ;
त्रिवृद्वेदः 'सुपर्णाऽख्यः' 'यज्ञं' वहति पूरुषं ;
अनपायिनी 'भगवती' श्रीः साक्षाद् आत्मनो हरेः ;
'विष्वक्सेनः' तंत्रमूर्तिः विदितः 'पार्षदाधिपः' ;
'नन्दादयोऽष्टौ द्वाःस्थाश्च' तेऽणिमाद्याः हरेर्गुणाः ;
'वासुदेवः, संकर्षणः, प्रद्युम्नः,' पुरुषः स्वयं ,
'अनिरुद्ध' इति, ब्रह्मन्, मूर्त्तिव्यूहोऽभिधीयते ,
स विश्वः, तैजसः, प्राज्ञः, तुरीयः, इति वृत्तिभिः;...
एक एव हि लोकानां सूर्यः आत्माऽऽदिकृद् हरिः ।(भा०स्कं०१२)
यदाहुः 'वासुदेवा'ऽख्यं 'चित्तं' तन् महदात्मकं ..
'अहंकारः' च त्रिविधः, सहस्रशिरसं (विभुं)
'संकर्षणा' ऽख्यं पुरुषं यं 'अनन्तं' प्रचक्षते...
('मनो' 'अनिरुद्धः'; 'प्रद्युम्नः' 'कामो' 'बुद्धि' स्तथैव च)"(,, ३)
नह्येव-एतादृशैर्भावैः, जनताशिक्षणाय वै ,
बुद्ध्युत्कर्षाय चैवापि 'बालानां' रुचिरैः क्रमैः ,
मूर्त्तिदर्शन-यात्रादि-स्नानादि किल कार्यते ;
मेषीप्रपातवत् किंतु, मूढग्राहाय केवलं ;
'रौप्यं स्थापय मूर्त्यग्रे, पुष्पं किर, जलं क्षिप ,
क्षिप्रं परिक्रमां कृत्वा गच्छ'-इत्येवोपदिश्यते ।
ईदृशी धर्मशास्त्रस्य धर्मस्याऽपि च दुर्दशा ;
निःश्रेयसं चाऽभ्युदयं स कथं साधयिष्यति ?

### अर्थशास्त्रदुर्दशा

विलुप्तं एवाऽर्थशास्त्रं प्रायो ऽद्यत्वे न लभ्यते ;
कौटलीयं 'अर्थशास्त्रं' न शास्ति खलु, 'जीविकाः'

काः काः, प्रजाभिः काभिश्च, साधनीयाः कथं कथं ;
प्रायशस्तस्य लक्ष्यं तु राजकोषविवर्धनं,
न प्रजाभ्यस्तु सर्वाभ्यो सद्वृत्तीनां प्रबोधनं ।
आदिष्टं मनुना स्पष्टं विषयेऽस्मिन् पुनः पुनः—
"सर्वेषां ब्राह्मणो विद्याद् वृत्त्युपायान् यथाविधि,
प्रब्रूयाद् इतरेभ्यश्च, स्वयं चैव तथा भवेत् ;" (म०)
वर्णानां वृत्तयश्चापि-आदिष्टास्तेन चतुर्विधाः ;
षट् कर्मणां तु विप्रस्य "त्रीणि कर्माणि जीविका,
अध्यापनं, याजनं च, विशुद्धाच्च प्रतिग्रहः ;
शस्त्रास्त्रभृत्त्वं क्षत्रस्य; वणिक्पशुकृषिर्विशः"; (म०)
"शिल्पानि, सेवा, शूद्रस्य, प्रभुः कर्म समादिशत्" ।
सर्वेषां वृत्त्युपायान् के प्रब्रुवन्त्यद्य 'ब्राह्मणाः'?
धनुर्वेदं, तथा वार्त्ताशास्त्रं, शास्त्रं कृषेस्तथा,
शास्त्रं गो-महिषा-ऽजा-ऽश्व-हस्त्यादीनां विदन्ति के ?
वस्त्र-वास्तु-धातु-रत्न-शास्त्राणां केऽद्य पंडिताः ?
विप्राः विविधशिल्पानि केऽद्य शिक्षयितुं क्षमाः ?
उक्तं, "धिग् जीवितं राज्ञो, राष्ट्रे यस्याऽवसीदति
द्विजो वा, ऽन्यो मनुष्यो वा" (म०भा०); प्रजानां वृत्तिकल्पनैः
भरणं पोषणं धर्म्यैः नृ-प-धर्मो विशेषतः ;
साम्प्रतं क्षत्रियम्मन्याः कति-एवं कुर्वते 'नृ-पाः' ?
स्व-कोष-पाः तु ते प्रायः, दुर्विलासाऽर्थमेव च ।
"विद्या विवादाय, धनं मदाय, शक्तिः परेषां परिपीड़नाय,
खलस्य; साधोः विपरीतं एतत्, ज्ञानाय, दानाय च, रक्षणाय",
विप्रस्य, वैश्यस्य च, क्षत्रियस्य, द्विजत्रयस्य क्रमतः तद् एवं ।
ईदृशं भ्रंशनं सर्वशास्त्राणां अद्य दृश्यते ।
बुभुक्षिताः प्रजाः सर्वाः अर्थशास्त्रविलोपनात् ।

कथं सच्छास्त्रोद्धारः ?, शास्त्राऽशास्त्रनिर्णेता कः ?

नष्टभ्रष्टाऽगमोद्धारः कथं खलु पुनर्भवेत् ?
किं सच्च च. किं असच् शास्त्रं इति निणष्यति-इह कः ?
"तस्माच्छास्त्रं प्रमाणं ते कार्याऽकार्यव्यवस्थितौ", (गी०)
श्लोकार्धमेतद् गीतायाः पुनः पुनर्‌अनूद्यते
धर्माधिकारिणस्मन्यैः अपि धर्मोपदेशकैः।
तत्र-एतत् तु विचार्यं स्यात् 'पंडितेन'-इह धीमता—
कृष्णेन-उद्दिश्य किं शास्त्रं वाक्यं एतद्-उदीरितं ?
( "सद्-असद्-विवेकिनी बुद्धिः पंडा यस्य, स पंडितः" ; )
अध्यात्मशास्त्रं तच्छास्त्रं इति पूर्वं प्रदर्शितं।
अन्यद् विवेचनीयं च सूक्ष्मं अत्र विवेकिना—
अस्तु शास्त्रं प्रमाणं नः कार्याऽकार्यव्यवस्थितौः
किंतु किं नः प्रमाणं स्यात् शास्त्राऽशास्त्रविनिर्णये ?
मेधा-एव तत्र "विदिताऽखिलशास्त्रसारा" (दु० स०)
कुर्यात् प्रमां, न तु मुधाऽचितपुस्तभारा ;
बुद्धेर् अथो न गतिर् इत्यपि बुद्धिसाध्यं ;
बुद्धेः प्रभुत्वं इह -नैव कदापि बाध्यं।
न जातु जनयंतीह शास्त्राणि पुरुषं क्वचित् ;
पुरुषा एव शास्त्राणि सर्वत्रोत्पादयंति हि।
पाश्चात्यैर् निर्मितं शास्त्रं अद्भुतं बलवन् नवं,
येनाऽप्रतिहता तेषां गतिः खेऽपि स्थले जले ;
प्रभुत्वमपि सर्वेषु देशेषु पृथिवीतले।
ऋषिजान् स्वांस्तु मन्वानाः, परमात्मांशाधिष्ठिताः,
वयं किं अवसीदामो हस्तपादादिसंयुताः,
कतिचित्पुस्तकीदासाः 'शास्त्र-शास्त्रे' ति-राविणः ?
वेदो मान्यः, 'क़ुरानो' वा, 'बैबलो' वा-इति संशये,

ऋते तु बुद्धिं आत्मीयां कः प्रभूयाद् विनिर्णये ?
सर्वे ते स्वं स्वं एव-इह सर्वश्रेष्ठं वदंति हि,
कः तन्मध्ये प्राड्विवाको, मनीषां मानवीं ऋते ?
अयं मान्यो, न मान्योऽन्यः, इत्येवमपि निश्चिते,
वाक्यं अत्रस्थं एतत्तु प्रक्षिप्तं, विकृतं नु, वा,
मौलिकं चाऽपि शुद्धं वा-इति प्रश्ने समुपस्थिते,
संदिहाने जने भूयः, उत्तरं कः प्रदास्यति,
विना बुद्धिमतां बुद्धिं पक्षद्वयविवेचिनीं ?
पाठोऽयं मौलिकः शुद्धो,-ऽपि-इत्येवं निर्णये कृते,
वाक्यस्याऽस्याऽयमेवाऽर्थो, ऽन्योऽर्थो वा संभवेद्, इति
संशयाने जने भूरि, कस्तमर्थं विनिर्णयेत् ?
स्पष्टमेव प्रमाकर्त्री बुद्धिरेवात्र सिद्धिदा।
"व्याख्या बुद्धिबलाऽपेक्षा", बुद्धिं नाऽत्येति कश्चन;
स्वीयां छायां यथा नैव कोऽपि लंघयितुं क्षमः।
"यस्य नाऽस्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किं ?
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ?";
गायत्यतो नैकवारं भगवान् उरुगायनः,
"बुद्धौ शरणं अन्विच्छ बुद्धिनाशात् प्रणश्यति," (गी०)
अध्यात्मशास्त्रं विशदं सारतः प्रतिपादयन्,
तदेव शास्त्रं भूयश्च 'शास्त्र'शब्देन लक्षयन्,
"इदं गुह्यतमं शास्त्रं", "गुह्याद् गुह्यतरं" तथा,
"सर्वगुह्यतमं चापि शृणु मे परमं वचः"। (गी०)
योगवासिष्ठकारश्च स्पष्टमाचष्ट भूरिशः,
"युक्तियुक्तमुपादेयं वचनं बालकादपि,
अन्यत् तृणमिव त्याज्यं अप्युक्तं पद्मजन्मना।"
ईश्वरोऽस्ति, न वा सोऽस्ति ? अस्ति चेत् कीदृशोऽस्ति सः ?

वाक्यमेतच्च तेनैव कथितं ? वंचकेन वा ?–
निर्णयश्चांतिमो ह्यत्र कथं स्याद् बुद्धिं अंतरा ?
एवं शास्त्रे दरिद्राणप्राणे, त्राणं करोति सा
बुद्धिराऽत्मप्रभा साक्षाद् अंधकारप्रकाशिका।
न नाम पुस्तिकाभारः, क्लिष्टाः शब्दाः न चापि वा,
न 'फक्किका'भिर्नटनं, नाऽ'वच्छेदकता'झरी,
न 'शास्त्रार्थ'-विवादाः वा, "हृदयं" किंतु मानवं
"सर्वासामेव विद्यानां एकायनं" इति श्रुतिः ;
"आत्मनोऽन्यत्र यो वेद ब्रह्म, क्षत्रं, तथा-इतरत्,
यत् किंचिदपि, तं तत् तु परादात्" इति च श्रुतिः ;
बृहदारण्यके प्रोक्ता ध्वनत्यद्यापि सुस्वना।
"उद्धरेद् आत्मनाऽऽत्मानं, नाऽत्मानं अवसादयेत्";(गी०)
"सर्वं आत्मनि सम्पश्येत्, सच्चाऽसच्च, समाहितः;
सर्वं आत्मनि सम्पश्यन्, नाऽधर्मे कुरुते मनः"; (म०)
न 'शास्त्र'-नामकग्रन्थपृष्ठे सर्वं तु दृश्यते।
य एव परमात्मा-एषः स्मृतिकारान् अचेतयत्,
स एव व्यापकोऽद्यापि जागर्त्येव बुधेषु-अहो ;
अमरो निर्जरो व्यापी सर्वः सर्वत्र सर्वदा,
मानवानां विशेषेण हृद्गुहासु स्थितः सदा ;
नाऽयं मृतो, न वा वन्ध्यो जातः, उत्पाद्य तान् ऋषीन्।
समर्थः उत्पादयितुं तादृशान्, वा ततोऽधिकान्,
न-इदानी अस्ति-असौ किन्नु, सर्वशक्तिधरःप्रभुः ?
ध्यात्वा तं परमात्मानं, श्रद्धां बध्वाऽऽत्मनि दृढ़ां,
अध्यात्मशास्त्रं चैवाऽपि शीलयित्वा सुनिश्चितं,
"लोकसंग्रहमेवापि पश्यंतः कर्त्तुमर्हथ" (गी०)
सत् शास्त्राणां च सर्वेषां जीर्णोद्धारं, तथैव च

नवीनानां उपज्ञानं, प्रज्ञया, तपसा, पुनः ;
यथा हि याज्ञवल्क्येन सूर्योपासनया कृताः
अयातयामाः शुक्लाश्च वेदाः वाजसनेयिनां ।
( 'वाजो' वीर्यं, शुक्रं, इति; चयनं, पूजनं 'सनिः' ;
वीर्यं रक्षंति ये, चोर्ध्वं नयंति ब्रह्मचर्यया ,
'शिरोव्रतैः" च योगोक्तैः यैस्तु तत् परिणाम्यते
बुद्धि-इंद्रिय-मनः-पेशी-हृदां वर्चसि, अथ-ओजसि ,
तेजसि-अपि, बले चैव, सहसि-अपि तथा, क्रमात् ,
अथ किं, सूक्ष्मदेहेन यच्छक्त्यैव विचर्यते ,
तपस्विनस्ते ऋषयः तथ्याः 'वाजसनेयिनः' ;
"सर्वप्रवह्लिकानां चाऽप्याश्रयः सूर्यः" उच्यते , (निरुक्त०)
वीर्याणां अप्रमेयाणां शक्तीनां निचयो महान् ;
नाम 'वाज-सनिः' तस्याऽस्ति-अन्वर्थश्चापि हेतुभिः ;
उपासकाश्च तस्याऽतो ज्ञाताः 'वाजसनेयिनः' ,
सच्छास्त्राणां उपज्ञाने शक्तास्ते, ऽपि प्रवर्त्तने । )
प्राचीनमेव सद्धर्मं उज्जीवयत वै पुनः ,
अध्यात्मशास्त्रेण तु यः सर्वथा सम्मतो भवेत् ;
प्रवर्त्तयत नूत्नांश्चाऽप्याचारान् समयोचितान् ,
सर्वथा ऽध्यात्मशास्त्रस्य ये भवंत्यनुसारिणः ।
निश्चिनोति चतुर्वर्गं अध्यात्मं शास्त्रमेव हि ,
तथा तत्साधनोपायांस् तदेव विशिनष्टि च ;
"नह्यनध्यात्मवित् कश्चित् क्रियाफलं उपाश्नुते ;
अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ;
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः" ; ( म० )
श्रुतिं बुभुत्समानानां आत्मज्ञानं परायणं ।
"आत्मैव देवताः सर्वाः सर्वमात्मनि-अवस्थितं ,

आत्मा हि जनयत्येषां कर्मयोगं शरीरिणां ;
यस्तु सर्वाणि भूतानि आत्मन्येवाऽनुपश्यति ,
सर्वभूतेषु चात्मानं, ततो न विजुगुप्सते ;
ये चैव सात्त्विका भावाः, राजसाः, तामसाश्च ये ,
'मत्तः' एव हि ते सर्वे, न तु '-अहं' तेषु, ते 'मयि' ;
यस्य सर्वं अभूद् आत्मा ब्रह्मज्ञस्य विजानतः ,
को मोहस्तस्य कः शोकः एकत्वं अनुपश्यतः ;
सर्वं भवति विज्ञातं ज्ञातेन-एकेन चाऽत्मना ;
अत्ति सर्वान् पदार्थांश्च, सर्वान् अत्येति-अपि स्वयं ,
सर्वत्र-अतति यत् चाऽयं सततं सर्वभुग् विभुः ,
सर्वान् परि-'मितां'श्चापि 'मा'-इत्यनेन निषेधति ,
'न-इति' 'न-इति' इति नित्यं च, तस्माद् 'आत्-मा'-इति कथ्यते ।
सर्वं आत्मनि संपश्येत्, सत् चाऽसत् च, समाहितः,
सर्वं आत्मनि सम्पश्यन् नाऽधर्मे कुरुते मनः ।
इमे समुद्राः गिरयः ब्रह्मांडानि जगन्ति च ,
अन्तःकरणतत्त्वस्य खंडाः बहिरिव स्थिताः" ।
( म०; उ०; गी०; उ०; पु०; म०; यो० वा० )
येन-एतद् अपरोक्षेण, न शब्दैरेव केवलं ,
अनुभूतं, यस्य वृत्तं साक्षित्वं कुरुतेऽत्र च ,
लोकाः यं सुचरित्रं च निःस्वार्थं चाऽपि जानते ,
स एव धर्मं निश्चेतुं संशये सम्यग् अर्हति ।
"यं वै ब्रूते स धर्मः स्याद् एको वाऽध्यात्मवित्तमः" । (या०स्मृ०)

वेदपुराणेतिहासाऽर्थभ्रंशः; कथं तदुद्धारः

"सरहस्योऽधिगन्तव्यो वेदः सपरिबृंहणः ;
धर्मेणाऽधिगतो यैस्तु वेदः सपरिबृंहणः ,

ते शिष्टाः ब्राह्मणाः ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ;
इतिहासपुराणाभ्यां वेदं च परिवृंहयेत्,
विभेत्यल्पश्रुताद्वेदो—'माम् अयं प्रतरिष्यति", (म०; म० भा०)
इत्यादेशो मनोरस्ति; व्यस्तो व्यासेन चाऽप्यसौ ।
प्रायो लुप्तस्तु वेदानां रहस्यार्थो; विनाशनात्
तद्व्यञ्जकानां ग्रन्थानां; वुद्धिह्रासाच् च सर्वतः,
विवृद्ध्या वहुशश्चापि भारतेऽनधिकारिणां,
आध्यात्मिके विरक्तानां, सक्तानामाधिभौतिके,
(यथा भागवते, पूर्वं, तन्माहात्म्ये च, वर्णितं) ;
पर्वताऽरण्यदुर्गेषु, गुह्यविद्याः विजानतां,
ताश्च गोपयतां स्वं च, योगसिद्धतपस्विनां,
पापसम्पर्कभीतानां, ऋषीणां चाऽप्यपक्रमात् ।
"विद्याह वै ब्राह्मणं आजगाम—'गोपाय मां; शेवधिस्तेऽहमस्मि ;
असूयकायाऽनृजवेऽयताय मां मा दाः; वीर्यवती तथा स्याम्' ;
यः आवृणोति,-अवितथेन ब्रह्मणा, शिष्यस्य श्रोत्रं, अमृतं सम्प्रयच्छन्
तं जानीयात् पितरं मातरं च, तं न द्रुह्येत् कतमच्चनाह" ;(निरुक्त०)
"विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना,
आपद्यपि हि घोरायां न त्वेनां इरिणे वपेत् ;
अधर्मेण च यः प्राह, यश्चाऽधर्मेण पृच्छति,
तयोरन्यतरः प्रैति, विद्वेषं वाऽधिगच्छति ;
सावित्रीमात्रसारोऽपि वरं विप्रः सुयंत्रितः,
नाऽयन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी"; (म०)
"तपःश्रद्धे ये ह्युपवसंति-अरण्ये, शान्ताः,
विद्वांसः, भैक्षचर्यां चरन्तः,
सूर्यद्वारेण ते विरजाः प्रयान्ति, यत्राऽमृतः स पुरुषो ह्यव्ययाऽत्मा;
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं ;

तस्मै स विद्वान् उपनिषण्णाय सम्यक प्रशान्तचित्ताय शमान्विताय,
येनाऽक्षरं पुरुषं वेद सत्यं प्रवक्ति तां तत्त्वतो ब्रह्मविद्यां" । (उ०)

अध्यापकाश्चाऽध्येतारः कति-अद्यत्वे 'सुयंत्रिताः' ?
परस्परं च वर्त्तन्ते पितृवत्पुत्रवत् कति ?
तथाऽपि ऋषिभिः लोकः, मातृवद्-हृदयालुभिः ,
कथंचिल् लोभनैः व्याजैः आत्मविद्यां तु शिक्ष्यते ;
श्रोतुमिच्छंति नैव-एते किंतु, मोहवशं गताः ;
'संस्कृतं' चापि, 'धर्मं' चापि,-उपजीवद्भिरेव च ,
इतिहासपुराणानां गूढ़ार्थो ह्यापितोऽखिलः ;
बृंहयंतु कथं वेदान्, तयोर्-अथऽपि-अशिक्षिताः ?

रूपकाणि

'समुद्रे' शयनं विष्णोः, तन्नाभेः 'पद्म'जन्म च ,
उत्पत्तिर्ब्रह्मणस्तत्र; 'मधु-कैटभ'तो भयं ,
ऊरौ-'अनाद्रे' हननं तयोरपि च विष्णुना ;
'समुद्रमन्थनं देवै दैत्यैर् 'मंदरदंडतः' ,
'कूर्मपृष्ठे' निधाय-एतं, रज्ज्वा 'वासु'किना तथा ;
तस्माच् चतुर्दशानां च रत्नानां, च श्रियो, जनुः ,
हालाहल 'विष'स्यापि, 'वारुण्या'ः, 'अमृत'स्य च ;
सैंहिकेयशिरच्छेदः 'दिव्यचक्रेण' विष्णुना ,
लुब्धस्याऽमृतपानार्थं दैत्यस्य तु सुरद्विषः ,
स्थितस्य कपटेनाऽपि 'मध्ये' 'भास्कर-चन्द्रयो'ः ,
'गिरणोद्गिरणं' 'राहु-शिरसा' चाऽसकृत् तयोः ;
'वृत्रा'ऽसुरवधश्चापि, यस्यैका 'हनुर्' अस्पृशत्
दिवं, भुवं द्वितीया च, 'दधीचि-अस्थि'कृतेन च
'वज्रेणैव' 'महेन्द्रेण'; हत्यायाश्च 'विभाजनं'

पृथिवी-जल-वृक्षेषु नारीष्वपि चतुर्विधं,
सर्वेषां 'पापचिह्नानां' 'वरैः' प्रच्छादनं तथा ;
'चंद्रेण' 'गुरु'-भार्यायाः 'तारायाः' 'हरणं', तथा
तस्यां 'वुध'स्य जन्मा,ऽथ 'संग्रामः' 'तारका'मयः,
तदन्ते 'गुरवे' 'दानं' 'तारायाः' ब्रह्मणा पुनः ;
वुधस्याऽऽगमनं पृथ्व्यां 'चंद्र-वंशस्य' जन्म च ;
'सूर्य-भार्या-ऽश्विनी-नासा-पुटयोर्' जन्म चा'ऽश्विनोः'
'नास'त्ययोः, 'भिषक्त्वं' च 'देवानां' उत्तमं तयोः ;
विंध्यस्योच्छ्रयणं, सूर्यमार्गरोधः, ततो विधेः
आज्ञया प्रस्थिते 'ऽगस्त्ये' 'दक्षिणां', पर्वतस्य च
'प्रणामो' ऽस्मै दंडवद्, यः नाऽधुनाऽपि समाप्यते ;
सप्त-द्वीपा-ऽब्धिनिर्माणं 'प्रियव्रत-रथ-भ्रमैः' ;
सिन्धोः 'पानं' अगस्त्येन, 'मूत्रत्वेन' विसर्जनं ;
'अहल्या'-व्यभिचारश्च, शपनं 'चेन्द्र-चन्द्रयोः',
तस्याः अपि, च, तद्भर्त्रा 'गो-तमेन' महर्षिणा,
'सहस्राक्ष'त्वमेकस्य, 'पाक्षिको' ऽन्यस्य च 'क्षयः',
अहल्यायाश्च निःसंज्ञ-'शिलात्वं' वहुवार्षिकं,
'राम'स्य 'पादस्पर्शेन' संज्ञालाभः पुनस्तथा ;
ब्रह्मणश्चा 'ऽश्रुविन्दुभ्यो' ऽसंख्यरोगसमुद्भवः ;
क्रोधाच् च्युतेभ्यः केशेभ्यः तस्या-'ऽहीनां' च,संभवः ;
स्खलितस्य महेशस्य मोहिनीरूपकामिनः
धातूनां पारदादीनां उत्पत्तिर्वीर्यतस्तथा,—
ईदृश्यः संति शतशः पुराणेष्वद्भुताः कथाः ;
अप्रतर्क्याः, असंभाव्याः, वुद्धिग्राह्यास्तु नैव याः ।

---

रूपकार्थलापनं आवश्यकं

उक्तं महर्षिभिः सर्वं किं एतन् मत्तजल्पितं ?
मैवं । किं तर्हि ? । सन्त्येव कृत्रिमाणि तु सर्वथा ,
कृतान्याऽख्यायिकारूपैः अद्भुतैः, बुद्धिपूर्वकं ,
वैज्ञानिकानां तथ्यानां रूपकाणि-एव, तत्त्वतः ;
आध्यात्मिकोऽर्थः केषांचित्, केषांचिच्चाऽधिदैविकः ,
तथाऽपरेषां केषांचिद् आधिभौतिक एव हि ,
अनेकेऽर्थाश्च केषांचित्, सादृश्यात् सूचितास्तथा ,
(सर्वेष्वंगेषु प्रकृतेः 'समता'-न्यायदर्शनात्';
यथा माहेश्वरैः सूत्रैः, पाणिनिश्चापि बोधितः
तत्त्वं व्याकरणस्या, ऽथ वेदांतं नन्दिकादयः ; )
'बालानां' रोचनाया, ऽपि क्रमशो बुद्धिवृद्धये ,
पिप्रक्षावर्धनेनाऽपि, जिज्ञासोद्बोधनेन च ,
कुतूहलात् कृते प्रश्ने, उत्तरैस्तदनंतर ,
तत्त्वार्थानां च कथनैः, तेषां सच्छिक्षणाय च ;
तादृश्यो वत्सलैः पूर्वैः अद्भुताः निर्मिताः कथाः ।
एवं एव हि सर्वाणि रूपकाणि तु पंडितैः ,
'व्यासै'राधुनिकैर्नूनं व्याख्येयानि दयालुभिः ,
जनानां सुखबोधाय, वर्धनाय धियां क्रमात् ।
किंतु सर्वोपि तत्त्वार्थो रूपकाणां तु विस्मृतः
पंडितैः स्वयमेवाद्या,ऽवधीर्यंते च पृच्छकाः ,
आक्रुश्यंते च, निंद्यन्ते, आक्षार्यन्ते च धर्षणैः—
'अक्षरार्थे न संशय्यं', 'श्रद्धेयोऽस्ति-अयं एव हि' ,
'नास्तिक्यमंत्र जिज्ञासा', 'शंका पापं महत् खलु' ,
'सद्यः स नरकं गन्ता संदिग्धे यो मनाग् अपि' ।
देशे दशायां ईदृश्यां, स्वातंत्र्येण विचारकाः ;

वेदेषु च पुराणेषु निरास्थाश्चावधीरिणः
भवेयुश्चेत्, किमाश्चर्यं, 'हिन्दु'धर्मे च सर्वथा ?
विज्ञानानां नवीनानां पाश्चात्यानां सहायतः,
प्रज्ञानानां पुराणानां गभीरैः मननैः स्थिरैः,
लुप्तानि गूढज्ञानानि लप्स्यंते प्रायशः पुनः।
भारते त्वेतदर्थं हि प्राक्प्रतीच्योः समागमः,
कल्याणाय-उभयोरेव निर्दिष्टो जगदात्मना;
किंतु-उभयोः पापबुद्ध्या जातः पीड़ाकरस्तयोः।

बुद्धिविमर्दे 'महाजन'बुद्धिर्निर्णेत्री

'बुद्धिरेव हि निर्णेत्री'-सत्यमेतत् तु भासते,
तथाऽप्युत्पद्यते प्रश्नः-'बुद्धिसाम्यं न लभ्यते,
मुंडे मुंडे मतिर्भिन्ना, मतभेदः पदे पदे,
अश्वत्थामा यथा प्राह कृपं, पर्वणि सौप्तिके,
"सर्वो हि मन्यते लोक आत्मानं बुद्धिमत्तरं,
सर्वस्याऽत्मा बहुमतः, सर्वोऽत्मानं प्रशंसति,
तस्यैव तु मनुष्यस्य सा सा बुद्धिस्तदा तदा,
कालयोगे विपर्यासं प्राप्याऽन्योऽन्यं विपद्यते,
अन्यया यौवने, बाल्ये, बुद्ध्या भवति मोहितः,
मध्येऽन्यया, जरायां तु सोऽन्यां रोचयते मतिं"; (म०भा०)
मिथो विवदमानेषु धर्मकृत्ये च शास्त्रिषु,
निश्चेयं हि कथं—'मान्योऽयमेवाऽध्यात्मवित्तमः ?'
इदमेवोत्तरं तत्र-'कृत्ये सामाजिके सति,
समष्टिबुद्धिरेवाऽत्र कुर्याद् अन्त्यं विनिर्णयं—
माननीयो हि सर्वेषां अयम् अध्यात्मवित्तमः।'
"श्रुतयो विभिन्नाः, स्मृतयोऽपि भिन्नाः, नैको ऋषिर्यस्य वचः प्रमाणं,

धर्मस्य तत्त्वं निहितं गुहायां, 'महाजनो' येन गतः स पन्थाः" (म०भा०)
'सच्चारित्र्याच्, च सद्वृत्तात्, यशसा च बहुश्रुतैः,
तपो-विद्या-समायुक्तो ऽयमेवाऽध्यात्मवित्तमः'—
इत्येवं निर्णयं कर्तुं नाऽन्यः शक्तो 'महाजनात्'।
'महाजने', 'लोकमते', 'भूयसीये' वसन् स्वयं
'वासुदेवो' 'महत्तत्त्वं' कुरुते तं विनिर्णयं;
कार्यं तु स्तम्भं आपन्ने, नैवाऽस्ति गतिरन्यथा।
'महाजनः' समूहो वै जनतायाः महान् स्मृतः,
यथोक्तं धृतराष्ट्राय महाप्राज्ञेन मंत्रिणा
भ्रात्रा धर्माऽवतारेण विदुषा विदुरेण हि।
"एकः पापानि कुरुते फलं भुंक्ते 'महाजनः',
देशाचारान् समयान् जातिधर्मान् बुभूषते यस्तु परावरज्ञः,
स यत्र तत्राभिगतः सदैव 'महाजनस्या' धिपत्यं करोति"; (म०भा०)
कुमारसंभवे चोक्तं कविना श्रुतशालिना,
"विलोक्य वृद्धोक्षमधिष्ठितं त्वया, 'महाजनः' स्मेरमुखो भविष्यति।"
वात्स्यायनेनापि तथा कामसूत्रेषु भाषितं—
"...'महाजनेन' चरितं राज्ञां अनुविधीयते
यतो,ऽतस् तैर् न पापिष्ठं कर्त्तव्यं पारदारिकं।" (वा०का०सू०)
तर्कोऽप्रतिष्ठो, मतयो विभिन्नाः, कृत्ये स्थिते चात्ययिके समक्षं,
धर्मस्य तत्त्वे पिहिते गुहायां, 'महाजन' स्यैव हि बुद्धिरीष्टे—
'अयं हि मान्यो, ह्ययमात्मवेदी, धर्मस्य तत्त्वं किल हृद्गुहायां
अस्यैव सर्वं निहितं च सर्वं, अस्यैव बुद्धिश्च हितं करिष्यति'।
प्रातिस्विके वस्तुनि नैजबुद्धिः, सार्वस्विके बुद्धिसमष्टिरिष्टा;
समाजधर्मे पतिते तु संशये, समाजबुद्धिर्हि पथप्रदर्शिका।
एकाकिनोऽधिकारो वा, कृत्यं वाऽपि, न विद्यते;
उभौ-अपि प्रवर्त्तेते सम्बन्धेऽन्यैः सह-एव हि।

"अनायकाः विनश्यंति, नश्यंति वहुनायकाः,
कुनायकाश्च नश्यंति, तस्मात् कार्यः सुनायकः ;"
"सर्वे यत्र तु नेतारः, सर्वे पंडितमानिनः,
सर्वे प्राथम्यं इच्छंति, तद् वृन्दं ह्याशु नश्यति ।"
तपो-विद्या-युतो नेता, निस्स्वार्थी, सुपरीक्षितः,
रागद्वेषविमुक्तश्च, निष्पक्षः, कीर्त्तिमान् बहु,
सर्वेषां संमतो यत्र, तत्र स्याल् 'लोकसंग्रहः',
'कर्मवर्णा' नुसारेण, सर्वेषां च सुखं तथा ;
'लोक-विग्रहः' एव स्याद् यत्र नेता न तादृशः ।
"सैनापत्यं च, राज्यं च, दंडनेतृत्वमेव च,
सर्वलोकाऽधिपत्यं वा, वेदशास्त्रविद् अर्हति" । (म०)
प्रजा-वृतो 'नृ-पो' यत्र, तथैव च 'पुरो-हिताः',
प्रजा-वृताः मंत्रिणश्च, तत्र तु-अस्ति समन्वयः
'एक'-'प्रजा'-'संघ'-'गण'-राज्यानां किल सर्वथा ।
'एको' नृपो, मंत्रि-'गणाः', 'प्रजा'-'संघ'स्य 'संमताः',
प्रजाभिश्च 'वृताः', तस्मात् सर्वेषां अत्र संग्रहः ।

### सर्वमानवसंग्रहः

संग्रहेणैव जेष्यंति, विग्रहेण न, 'हिन्दवः' ;
अवरोधेन सेत्स्यंति, न विरोधेन, हिन्दवः ;
परिवेष्ट्या-ऽपरान् धर्मान्, जरयित्वा तथाऽत्मनि,
प्रभविष्यंति सर्वत्र, शक्ष्यंति-अपि-आत्मरक्षणे ;
इयमेव प्रथा पूर्वं आ-सम्राड्-हर्षवर्धनम् ;
तावद्, याः परदेशेभ्यो भारतं समुपागताः
जातयः, ताः समस्तास्तु चतुर्वर्णेषु मेलिताः,
गुणकर्मानुसारेण, क्रमशश्चाऽर्यतां इताः ;

शकाः हूणाश्च, यवनाः, हिमवत्प्रान्तवासिनः,
अन्ये च; कविना केचिद् बाणेन खलु वर्णिताः,
हर्षवर्धनयोधेषु, ये गताः भारतीयतां;
तासां विशेषधर्माश्च कालेन विलयं गताः,
मनोः साधारणे धर्मे, नाममात्राऽवशेषिताः।
तत्पश्चात्, 'जन्म-वर्णस्य' प्राबल्येऽत्यधिकं कृते
कुमारिलादिभिः, भूयान् विग्रहः समवर्धत,
परस्परं च, 'हिन्दूनां', बाह्यागन्तुभिरेव च,
ह्रासश्च तेषां अभवत्; भवत्येवाऽधुनाऽपि च।
कुमारिलस्यैव काले, शंकरस्य च, मुस्लिमाः
अवास्कंदन् सिन्धुदेशं, दिविष्ठे हर्षवर्धने;
तत्कालीनैर्द्विजैश्चापि 'म्लेच्छ-म्लेच्छे'ति निन्दिताः,
कोपिताश्च भृशं; नैव चतुर्वर्णेषु मेलिताः।
संत्येव तेषु विद्वांसः, संति चैवोद्भटाः भटाः,
वार्त्तादक्षास्तथा तेषु, संति च श्रमकिंकराः।
'देवलस्मृति'कारेण विदुषा दूरदर्शिना,
बलाद्विधर्मं नीतानां 'शुद्धौ' यत्नः कृतः; परं
ना ऽसौ सफलतां यातो; द्वेष एव व्यवर्धत;
'अन्ये ह्यशुद्धाः' एव-इति 'शुद्धि'-शब्देन ध्वन्यते;
स्व-समाज-शरीरे हि स्थापनं, मेलनं, तथा
जारणं, पाचनं तु आसीन् नीतिर्; अस्ति च साम्प्रतं।
आद्यः प्रजापतिर् नूनं सर्वसंग्राहको मनुः;
तस्यैव संततेश्चायं कथं विग्राहको भवेत्?
संग्रहस्यैव कालोऽयं, विग्रहस्य न कर्हिचित्।
मानवानां उपचयः सर्वेषां संग्रहेण हि;
विग्रहेण च सर्वेषां क्षय एव विभाव्यते।

'कर्म-वर्ण'-प्रकारेण शक्यते स च संग्रहः
मानवानां अशेषाणां; अन्यथा न कथंचन।
विशदः पुनरण्येषो ऽर्थोऽग्रे भूयः करिष्यते।
जन्मनैव हि वर्णश्चेद्, भवेल् लोकस्य विग्रहः,
नित्यं नूतनजातीनां उत्पत्त्या 'वर्णसंकरात्',
परस्परं चाऽस्पृश्यानां, द्विषन्तीनां परस्परं।
'जन्मनैवाऽहमुच्चोऽस्मि, नीचस्त्वं जन्मनैव च'—
यत्र सन्तीदृशाः भावाः, कथं स्नेहः परस्परं,
कथं वा संग्रहस्तत्र, कथं वा तत्र संघता?
नास्त्येव, कारणाद् अस्मात्, संघता ननु हिंदुषु।
गुणैरुच्चत्वनीचत्वे मान्ये स्तः सर्वमानवैः,
कर्मभिश्चापि; न त्वेवं केवलं किल जन्मना।
एतद्देशप्रसूताद् वै विदुषश्च तपस्विनः
"स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः",
न केवलं भारतीयाः, इति शास्ति प्रजापतिः।
"ब्राह्मणः, क्षत्रियो, वैश्यः त्रयो वर्णाः द्विजातयः,
चतुर्थ एकजातिस्तु शूद्रो; नास्ति तु पंचमः", (म०)
पृथिव्यां तु समग्रायां, इत्याज्ञा तस्य निश्चिता;
सैवाऽज्ञा शिरसा धार्या, पाल्या चाऽपि प्रयत्नतः;
दक्षिणे व्यपदिश्यंते बहवः किंतु 'पंचमाः',
मनोर्-आज्ञां अवज्ञाय, पूतम्मन्यैस्तु 'ब्राह्मणैः';
वैश्यानां क्षत्रियाणां च लोप एव हि तैः कृतः,
गर्वोक्तिर् यद् इयं तेषां-'कलौ-आद्यन्तयोः स्थितिः'।
सर्वेषां मानवानां हि जनको भगवान् मनुः;
सर्वे मनोर् अपत्यानि 'मनुष्याः', 'मानवाः' इति,
'मनुजाः' चाऽभिधीयंते, "पृथिव्यां सर्वमानवाः"।

"मनोर्वंशो मानवानां ततोऽयं प्रथितोऽभवत्,
ब्रह्म-क्षत्रादयः तस्मान् मनोर्जातास्तु मानवाः" (म०भा०)
'वर्ण'-वागुरया विद्वान्, सर्वदेशनिवासिनः
मानवान् अवरोद्धुं च, संग्रहीतुं च, शक्नुयात्,
यदि वै 'वर्ण'-शब्दस्य 'कर्मणा' वर्णनं भवेत्।
"कृणुध्वं विश्वं आर्यं" च वेदाज्ञा स्वनति स्फुटा।

वर्णानां लक्षणानि, जीविकाश्च

वृत्त-वृत्ति-अनुसारेण, स्वभाव-गुण-कर्मतः,
'कर्मणा वर्णः' इत्येव सिद्धान्तो; न तु जन्मना।
यस्मिंस्तपश्च विद्या च, स एव ब्राह्मणः स्मृतः;
यस्मिन् रक्षा च शौर्यं च, स एव क्षत्रियो भवेत्;
यस्मिन् दानं धनं धान्यं, वैश्यः सत्यः स एव हि;
यस्मिन् सेवा, न विद्या तु यस्मिन्, शूद्रः स उच्यते।
"षण्णां तु कर्मणामस्य, त्रीणि कर्माणि जीविका,
अध्यापनं, याजनं च, विशुद्धाच्च प्रतिग्रहः;
शस्त्रास्त्रभृत्त्वं क्षत्रस्य; वणिक्-पशु-कृषिर्विशः;
त्रयाणामपि धर्मस्तु दानं, अध्ययनं, यजिः"
सेवां तु विविधां कृत्वा शारीरैश्च परिश्रमैः,
शिल्पैश्च विविधैरेवं, 'भृति'र्या लभ्यते ततः,
स्ववर्णाद्, अन्यवर्णेभ्यो वा, सा शूद्रस्य जीविका;
"अवश्यं भरणीयो हि वर्णानां शूद्र उच्यते"। (म०भा०)
एताभिर्वृत्तिभिर्वर्णाः चत्वारोऽपि विवेचिताः;
यादृशीं जीविकां कुर्याद्, वर्णस्तस्यास्ति तादृशः;
'कर्मणा वर्ण' इत्यत्र 'कर्मा'ऽर्थः खलु 'जीविका'।
एवं विभागे वृत्तीनां हेतुः, स्वाभाविको गुणः;
जीविकाऽर्थं च संघर्षो माऽति भूद्, हेतुर इत्यपि।

वृत्तिसंकरो वर्णसंकरः;

वृत्तिसंकर एव वर्णसंकरः; तस्य घोरः परिणामः

वृत्त्या-एकया-एव जीवेच्च, न कुर्याद् वृत्तिसंकरं ;
वृत्तिसंकर एवाऽस्ति दारुणो वर्णसंकरः ;
विभिन्नवर्ण'नाम्नोः' तु-उद्वाहो नैवास्ति संकरः ;
'वर्ण' शब्दो 'वृत्ति'-वाची यतो; न त्वेव जन्मनः ।
'विद्यो'पजीविकां कुर्याद्; अथवा 'रक्ष'-जीविकां ;
अथवा वार्त्तया जीवेत्; सेवया-एवाऽथ वा-एकया ;
एवं कृते न कस्यापि वृत्त्यभावो भवेदिति ।

अतिप्रजत्वदोषाः

यदि नाऽतिप्रजत्वं स्यात्; 'मात्स्यो न्यायो'ऽन्यथा भवेत् ;
अंडानि-एकैकमत्स्यास्तु वर्षे वर्षे हि लक्षशः ,
अन्योऽन्यं भक्षयंत्येव ते, तेषां न्याय एव सः ।
"बहुप्रजाः निर्ऋतिं आविवेश .
बहुप्रजाः कृच्छ्रं आपद्यते च" ; (निरुक्त०)
नाऽतिप्रजत्वं उचितं; "अति सर्वत्र वर्जयेत् ।"
कांक्षन्नपि प्रजावृद्धिं वत्सलो भगवान् मनुः ,
दोषान्पश्यन् अतिवृद्धेः, सूचयति-आत्मनिग्रहं—
"यस्मिन् ऋणं संनयति, येन चाऽनन्त्यं अश्नुते ,
स एव 'धर्मजः' पुत्रः, 'कामजान्' इतरान् विदुः ;"
"कामात्मता न प्रशस्ता, न च-एव-इह-अस्तिअकामता ;"
द्वाभ्यां, एकेन वा, तुष्येत्, "विस्तरं तु न कारयेत्;" (म०)
एकेनाऽनेकवृत्तीनां संकरे कृते-आत्मनि ,
बहवो वृत्तिहीनाः स्युः, केचिच्च धनवत्तराः ;
बहूनां अति दारिद्र्यं, स्वल्पानां अति ऋद्धता ;
सर्वत्र-'अति' प्रवर्त्तेत; स्याद् व्यवस्था न मध्यमा ;

"आश्रयेन् मध्यमां वृत्तिं, अति सर्वत्र वर्जयेत्"—
उत्तमस्य नयस्याऽस्य भवेद् भङ्गो ऽत्यनर्थकृत् ।
यद् इदानीं महान् क्षोभः जगद् व्याप्नोति मानवं,
तत्र हेतुः प्रधानोऽयं वृत्तीनां एव संकरः,
स्वल्पानां अति सम्पत्तिः, विपत्तिर्भूरि भूयसां;
जनानां अति सम्बाधः पृथिव्यां चाऽत्र कारणं;
अत्यादरो धनस्याऽपि; स्वल्पत्वं च तपस्विनां
कृताऽत्म-कृतबुद्धीनां, विद्यासंचितवर्चसां,
शुचीनां, लोकमान्यानां, तपःसम्भृततेजसां,
भयाद् यत्तेजसः पापाः वर्जयेयुश्च दुष्कृतं,
अनुकुर्युः जनाः सर्वे येषां सच्चरितं तथा,
धने च नाऽति लुभ्येयुर् दृष्ट्वा तज्जीवनं शुचिं ।
ईदृशाः हेतवः संति लोकस्य दुरवस्थितौ ।
"आचिनोति च शास्त्रार्थान् धर्म्यान्; आचारयत्यपि
स्वं, अन्यांश्च, सदाचारं; तस्माद् 'आचार्य' उच्यते",
सद्भिर् आचरितैरेव स्वीयैर्यः शिक्षयेज् जनान् ।
'सद्ब्राह्मण'-पदाऽर्हाणां, तपोविद्याभृतां सदा,
'कर्म-वर्ण'-स्थापकानां, धर्म-कर्म-विभाजिनां,
प्रचारकाणां सद्भाव-सज्ज्ञानानां च यत्नतः,
'आचार्याणां' ईदृशानां सर्वत्रैवाऽपि-"अदर्शनात्
वृषलत्वं गत्वा लोके" प्रायः सर्वेऽपि मानवाः,
राजसैः तामसैः भावैः व्याप्ताः, न त्वेव सात्त्विकैः;
"वृषो हि भगवान् धर्मः, तं लाति वृषलो हि सः".
असात्त्विकैर्विवाहैश्च, तथाऽसात्त्विकभोजनैः,
भारते च विशेषेण 'नामवर्ण'-विमोहनैः,
चित्ते देहे च विकृताः, सूयन्ते विकृताः प्रजाः,

प्रवर्धते चाऽनुदिनं सा हि-अनर्थपरम्परा :
मार्कंडेयेन ऋषिणा, भारते वनपर्वणि,
कलिवृत्तांतकथने, विस्तराद् गदितं यथा।

मानवजगद्व्यापी द्रोहः

इदानी घोरयाऽशांत्या व्याप्तं वै मानवं जगत् ;
रणाश्च बहुदेशेषु प्रवृत्ताः प्रलयंकराः,
विंश्याः शत्याः विक्रमस्य द्वितीयार्धे समुद्गताः,
त्रिंशद्भिरपि वर्षैर् ये संशाम्यन्तीह नैव हि,
महाभारतसंग्रामात् चतुर्भीमतराः तथा,
अपि भूयो विवर्धन्ते देशे देशे दिने दिने :
प्राचीन'चीन'साम्राज्यं प्रजाकोपेन विप्लुतं,
विप्लावितं च साम्राज्यं प्रजाभी 'रूसकं' महत्,
तथा 'तुरुष्क'साम्राज्यं, राज्यं 'पारस्यं' एव च.
'जर्मनानां' च साम्राज्यं, राज्यं 'स्पेनीयकं' तथा :
'चीन-जापानयोः' युद्धं, 'रूस-जापानयोः' अपि,
फ्रैंचानां' 'ब्रिटनानां' च, 'जर्मनानां' तथैव च.
'इटालिकानां', 'स्पेनानां', तथैव-'अमेरिका'-भुवां,
'पारसीक'' तुरुष्काणां', 'अर्वाणां', 'अफ़ग़ानिनां',
'पोलानां', 'फ़िनिशानां' च, तथा 'हबशिना'-भुवां,
'ब्रिटनस्य' च सेनायां तथा भारतवासिनां
योधानां प्रेष्यभूतानां पिंडार्थं युद्धकारिणां :
किमन्यत्, सर्वजातीनां सर्वत्र जगतीतले :
ब्रिटनैर्दासतां नीते, सद्बिप्रक्षत्रलोपनात्,
स्वदोषैर्, भारते चापि घोरः क्षोभः समुत्थितः :
विधूय वा, निहत्य-एव. राजानं स्वं, प्रवर्त्तिता

श्रा,ऽऽनेकेषु-अपि देशेषु, 'संघराज्य'-विडम्बना ,
न-उत्पादयति संतोषं प्रजानां सा मनाग् अपि ,
प्रत्युता-ऽपादयत्येवाऽशांतिं घोरतरां ननु ;
अद्भुतानां उपज्ञानां सूक्ष्मविज्ञानशास्त्रिणां ,
दुष्प्रयोगो, बधायैव क्रियते, न हिते, नृणां ,
शस्त्रास्त्रोत्पादनायैव, नाऽन्नवस्त्रोपसम्पदे ।
तत् सर्वं फलितं नूनं वृत्तीनां संकरस्य च ,
विजृंभितायाश्च ततः समाजस्याऽनवस्थितेः ।
कारणं चाऽनवस्थायाः सर्वदेशेषु भूतले,
कर्त्तॄणां सुव्यवस्थायाः 'ब्राह्मणानां' अदर्शनं ।
सत्शिक्षायाः अभावोऽतः, तपसा निग्रहस्य च ,
सज्ज्ञानानां विलोपश्च, दुर्भावानां प्रचारणं ,
काम-क्रोध-लोभ-मोह-मद-मात्सर्य-वर्धनं ,
प्रजानां च मिथो द्रोहः, शासकैश्चापि पीड़नं ,
दुष्टानां शासकानां च स्वच्छन्दत्वं, भयं विना ।
"ब्राह्मणं तु स्वधर्मस्थं दृष्ट्वा बिभ्यति चेतरे" ,
स्वधर्मं चानुतिष्ठंति, कृत्यं सर्वं च कुर्वते ,
"नान्यथा, क्षत्रियाद्यास्तु; तस्माद्विप्रस्तपश्चरेत्"; ( शु० नी० )
"त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ,
कामः क्रोधः तथा लोभः, तस्माद् एतत् त्रयं त्यजेत्" ; ( गी० )
द्विजैरेव त्रयोऽप्येते पोष्यन्ते यदि-अहर्निशं ,
लौल्यमेव-इन्द्रियाणां चा,ऽप्यासक्तिर्विषयेषु-अति ,
तदा सर्वं कथं न स्यात् जगदेवाऽधरोत्तरं ?

आत्मज्ञानाऽवश्यकता

आत्मज्ञानविलोपाच्च, तथा चाऽस्याऽप्रयोगतः
जीवनव्यवहारेषु, समाजस्थापनाय च ,

रागद्वेषनिरोधाय, विभागाय च कर्मणां,
श्रमाणां, श्रममूल्यानां, सुखानां, न्यायतस्तथा,
संकरात्सर्ववृत्तीनां आपन्ना घोरदुर्दशा।
"यदा चर्मवद् आकाशं वेष्टयिष्यंति मानवाः,
तदा देवंअविज्ञाय दुःखस्यान्तो भविष्यति"।
न ज्ञात्वा परमात्मानं, देवानां देवमुत्तमं,
ज्ञानशुद्धेः भावशुद्धेः कर्मशुद्धेर् न सम्भवः।
"सैनापत्यं च राज्यं च दंडनेतृत्वमेव च,
सर्वलोकाधिपत्यं वा, वेदशास्त्रविद् अर्हति"; (म०)
'वेदस्य शास्त्रं' वेदान्तः, आत्मशास्त्रं यद्-ईरितं।
"यस्तु सर्वाणि भूतानि-आत्मन्येवाऽनुपश्यति,
सर्वभूतेषु चाऽत्मानं," स न कंचित् जुगुप्सते; (उ०)
आत्मवत्सर्वभूतेषु स एवाऽचरति ध्रुवं;
यस्तु नैवं विजानाति, वेत्ति भिन्नान् परांस्तथा,
स भेदबुद्धिसंमोहात् स्वार्थाय द्वेष्टि तान् परान्;
अति स्वार्थात् (न्) मिथो द्वेषः, ततः क्लेशो नृणां भृशं;
धर्म्यात् स्वार्थात् परार्थाच्च नीतिः, प्रीतिः, ततः सुखं;
"सर्वभूतस्थितं यो मां आत्मानं वेत्ति तत्वतः", (गी०)
आत्मनः प्रकृतिं चापि, स वै न्यायेन वर्त्तते;
स्वदेहमेव तु-आत्मानं वेत्ति यो भेददर्शनः,
अन्यदेहान् परान्-एव, स द्वेषैरभिभूयते।
यत्र सच्छिक्षकाः संति, पुराणेतिह्यवेदिनः,
सर्वव्यापिनमात्मानं पश्यंति च निरन्तरं,
अत एव सदा संति "सर्वभूतहितेरताः",
सुव्यवस्था समाजस्य तत्र स्यात् स्खलनं विना।
स्त्रीभिः सतीभिः सत्पुंभिः जगत् सत्येन धार्यते;

'श्रत्' शब्दोऽयं तु वेदेषु 'सत्य'-नामसु पठ्यते ;
'श्रद्-एतद्' इति 'धत्ते' या, 'श्रद्धा' सा बुद्धिरुच्यते ;
यस्यां सभायां 'श्रद्धेयाः' संति वै प्रायशो द्विजाः ,
सा-एव 'धर्म'-सभा, सा-एव सद्धर्मान् परिकल्पयेत्
समये समये, सर्वलोककल्याणकारकान् ,
यैः समाजे सुव्यवस्था स्थाप्येताऽपि दृढीभवेत् ,
परस्परं च श्रद्दध्युः सर्वेऽपि ननु मानवाः ;
सत्यवक्तृषु विश्वासः, विश्वासात् प्रीतिसंभवः ,
प्रीतेर् अन्योऽन्यसाहाय्यं, ततो ऋद्धिः, ततः सुखं ;
व्याख्या-इयं खलु सूत्रस्य—'जगत् सत्येन धार्यते' ।
"तितिक्षा-धृति-अहिंसाद्याः सत्याकारास्त्रयोदश ;
यद्भूतहितमत्यन्तं तत् सत्यमिति कथ्यते ;
असत्याद् भवति क्रोध-काम-लोभादिसम्भवः ,
त्रयोदशैते ऽतिबलाः शत्रवः प्राणिनां स्मृताः" ; (म० भा० शां०)
"न सा सभा यत्र न संति वृद्धाः, वृद्धाः न ते ये न वदंति धर्मं ,
नासौ धर्मो यत्र न सत्यमस्ति,सत्यं न तद् यच्छलमभ्युपैति";(म०भा०)
ईदृशाः सद्द्विजाः यस्मिन् , स समाजः समृध्यति ;
असत्यवादिनो यस्मिन् भूयांसः, स विषीदति ।

सर्वरोगभेषजं–समाजसुव्यवस्था

समाजसुव्यवस्थैव सर्वरोगस्य भेषजं ;
परंतु गुण-कर्मा-नुसारेण; नाऽन्यथा, यदि 'वर्णता' ;
गुणकर्मादि-अभावेऽपि जन्मना नहि केवलं ।
उत्तमं जन्म-कर्मभ्यां, कर्मणैव च मध्यमं ,
मिथ्यैव केवलं जात्या, वर्णवत्त्वं स्मृतं बुधैः ।
न केवलं तु तपसा, नाऽपि केवलविद्यया ;

न केवलं तु शौर्येण, नाऽपि केवलरक्षया ;
न केवलं तु दानेन, नाऽपि केवलवार्त्तया ;
न केवलं सेवयैव, नाऽपि भृत्या-एव केवलं ;
मानुषस्तु-उभयेनैव, वृत्त्याऽप्युचितया तथा ,
विप्र-क्षत्रिय-विट्-शूद्र-शब्दार्हो भवति, क्रमात् ।
"तपः-श्रुताभ्यां यो हीनो" नह्यसौ ब्राह्मणो भवेत् ;
भारायैव समाजस्य, विघ्नाय प्रगतेर्-सौ ।
"जात्या न क्षत्रियः प्रोक्तः, क्षतत्राणं करोति यः ,
चातुर्वर्ण्यबहिष्ठोऽपि, स एव क्षत्रियः स्मृतः"; (म०भा०शां० ७२)
"एतौ हि नित्यं संयुक्तौ-इतरेतरधारणे ;
क्षत्रं वै ब्रह्मणो योनिः, योनिः क्षत्रस्य वै द्विजः" ; ( „ )
"विशः" च नाम सामान्यं सर्वेषां वैदिकं नृणां ;
चतुर्णामपि वर्णानां योनिः प्रत्यक्षतो 'विशः' ।
'विशः' सन्ति 'प्रकृतयः'; 'वर्णाः' 'विकृतयः' तथा ;
सर्वे पदार्थाः मूलायाः 'विकाराः' 'प्रकृतेः' यथा ।
"नाऽब्रह्म क्षत्रं ऋध्नोति, नाऽक्षत्रं ब्रह्म वर्धते", ( म० )
नाऽवैश्यं उभयं जीवेत्, नाऽशूद्रं त्रितयं चलेत् ;
मुख-बाहु-उरू-पद्-वत् ते सर्वेऽन्योऽन्यं उपाश्रिताः ।
कार्त्तवीर्यस्य समये, सम्पाते ब्रह्मक्षत्रयोः ,
ब्राह्मणैः सह वैश्याश्च शूद्राश्चाप्येकतः स्थिताः ,
उद्धताः क्षत्रियाश्चापि दुर्मदाश्चैकतः स्थिताः ;
त्रिःसप्तकृत्वो युद्धानि तेषां आसन् परस्परं ;
प्रजानां कदनं चाभूत्, गर्भाणामपि शातनं ,
समाजाऽकुलता घोरा , धर्मकर्मादिसंकरः ,
लुलोप वर्णभेदश्च, निर्मर्यादं अभूज् जगत् ,
"अधरोत्तराऽपचारेण म्लेच्छभूताश्च सर्वशः ,

व्रात्यतां समनुप्राप्ताः, वहवो हि द्विजातयः" ; (म०भा०)
नवीनः प्रविभागश्च वर्णानां धर्मकर्मणां
पुनः कृतस्तु तत्पश्चात् कश्यपेन महर्षिणा,
"व्योकारहेमकारादि-जातिभ्यः क्षत्रियाः कृताः" ; (म०भा०)
पर्शुरामेण वसता चाऽपरांतेषु वै, तदा,
तत्रत्येभ्यो नवीनाश्च तद्योग्याः ब्राह्मणाः कृताः ;
( प्रसिद्धाः अद्य तद्वंश्याः संति 'चित्पावना'ऽख्यया—
मतं एवं तु केषांचिद्, अन्ये त्वेवं न मन्वते ) ;
कथैषा ब्रह्मवैवर्त्ते विस्तरेणास्ति वर्णिता ; (ब्र० वै०)
पार्थाय चैव कृष्णेन व्याख्याता शांतिपर्वणि,
सूचिता चापि भीष्मेण सेनापतिनियोजने ।
भविष्येऽपि प्रसिद्धाऽस्ति कथा, कण्वो मुनिर्यथा
'मिस्र'देशमनुप्राप्तः प्रेक्षकः पृथिवीमटन् ;
तत्र नासीत् तदा काचित् देशो वर्णव्यवस्थितिः,
अकारयद् ऋषिस्तत्र समाजव्यूहनं नवं,
प्रकृतेश्च प्रवृत्तेश्चाऽप्यनुसारं निवासिनां ।
पुराणेष्वितिहासेषु सर्वेष्वेवं, असंशयं,
स्वभाव-गुण-वृत्तिभ्यो दर्शितो वर्णनिर्णयः ।

(जीविका) वृत्तिः अंतिमा निर्णायिका

तत्रापि संशये, वृत्तिरेव निर्णयकारिणी ;
यादृशी जीविका यस्य तादृग् वर्णोऽस्त्यसंशयं ;
जीविकाकरणे शक्तिः प्रकृतिं तादृशी वदेत् ;
व्यवहारं असंप्राप्तो भवेत् सामान्य-'मानवः' ;
"शूद्रेण हि समस्तावद् यावद् वेदे न जायते", (म०)
"जगत् सर्वमिदं ब्राह्मं, कर्मभिर्वर्णतां गतं" ;(म०भा०)

व्यवहारं तु सम्प्राप्तो जीविका-साधकं पुनः,
नेन तेनोचितेनाऽथ 'वर्ण'-नाम्ना विविच्यते।
'शिक्षको' मानवोऽयं तु, 'रक्षको' मानवो ऽपरः,
'पोषको' मानवोऽन्यश्च, 'सेवको' हि-इतरो नरः।
स्वयंप्रज्ञो द्विजातिः स्याद् यः कार्यारम्भणक्षमः;
अपेक्षकः पराऽज्ञायाः परप्रज्ञः स एकजः।
'ब्रह्म-वेदो'पजीवित्वात्, 'क्षतत्राणो'पजीव्यया,
'भूकृष्यादिनिवेशेना','ऽशु-द्रवात्' प्रेषिते सति—
एवमेव हि चत्वारो मुख्यवर्णास्तु लक्षिताः।

प्राक्तनानि उदाहरणानि

क्षत्रियौ कृष्णजनकौ, तुलाधारो वणिक् तथा,
धर्मव्याधः शूद्र एव, ऋषीणामपि शिक्षकाः,
केवलं स्व-स्ववृत्तीनां वर्त्तनाद्, अविवर्त्तनात्।
विश्वामित्रः, गृत्समदः, वीतहव्यो,ऽथ मौद्गलाः,
भरतस्यानुजाः, गार्ग्याः, क्षत्रियाः बहवोऽपरे,
एवं वसिष्ठसम्बन्धी वैश्यश्चित्रमुखोऽपि च,
मतंगश्चापि चांडालः, ब्रह्मर्षित्वं प्रपेदिरे,
तपसा विद्यया सार्धं जीविका-परिवर्त्तनात्।
कृष्णो भोगी, शुकस्त्यागी, जनको राजकार्यकृत्,
वसिष्ठस्त्वप्सरःपुत्रः इक्ष्वाकूणां पुरोहितः,
पुराणकर्त्ता तत्पौत्रो वैश्यापुत्रः पराशरः,
कैवर्त्त्यांश्च सुतस्तस्य पुत्रो व्यासो महामुनिः
कर्त्ता वक्ता-इतिहासानां पुराणानां च भूरिशः
वेदानां प्रतिसंस्कर्त्ता ज्ञानाऽलोकप्रवर्त्तकः,
मदालसा महाराज्ञी, सुलभा ब्रह्मचारिणी,

चूड़ाला योगसिद्धा च, कर्कटी पिशिताऽशना,
गृहिण्यौ गार्गिमैत्रेय्यौ, गिरादेवी कुमारिका,
शुक्रो गुरुस्तु दैत्यानां, देवानां च बृहस्पतिः,
धर्मव्याधो व्याध एव, तुलाधारो तुलाधरः,
वैश्यः समाधिः दुर्गायाः ज्ञानं आप्नोद् यः उत्तमं,
"ममेत्यहमिति प्राज्ञः संगविच्युतिकारकं",
वेश्याऽसक्तो ऋषिर्दत्तः, विष्णुभक्तश्च नारदः,
प्रह्लादो दैत्यराजश्च, पितृलोकपतिर्यमः,
काकरूपधरश्चापि भुशुंडः पक्षिराड् ऋषिः—
ज्ञानं एकं तु सर्वेषां, कर्म तेषां पृथक् पृथक्;
जीविका-कर्मणा, वृत्त्या, वृत्तेन,-एते विवेचिताः,
पृथक् पृथक् च वर्णानां नामभिः प्रथिताः भुवि।

साम्प्रतानि उदाहरणानि

इतीयं प्राक्तनी वार्त्ता; साम्प्रती श्रूयतां पुनः।
'वकीलो', 'डाक्टरो', 'जज्ञो', 'दूकान्दारो'ऽथ 'मास्टरः',
'ज़मीदारो'ऽथ, 'मज़्दूरः', 'माली' वा, 'मेहतरो'ऽथवा,
'ग्वाला' वा, 'लोनिया' वापि, 'धानुको', 'मुस्हरो'ऽथवा,
'सुनारो' वा, ऽथ 'लोहारो', 'कुम्हारो' वा, 'बहेलिया',—
विवेचितास्तु प्रत्यक्षं सर्वे ते वृत्ति-कर्मणा;
जीविका-कर्मणो ह्येव प्रत्येकं नाम बोधकं,
अन्योऽन्याऽस्पृश्यजातीनां जातं एतर्हि वाचकं;
मूढग्राहेण सत्यार्थः कालेन वितथीकृतः,
जन्मनि-एवाऽग्रहस्याऽपि रूढ्या-एव-उत्सर्गभूतया,
स्वभाव-जनितानां चाऽपवादानां उपेक्षया,
सर्वेषां अधिकाराणां बलिभिश्चाऽतिलिप्सया,
विवंचयिषया चाऽपि कर्त्तव्यानां तु सर्वथा।

अध्यात्मशास्त्रदृष्ट्या तु, संघनिर्मितये ध्रुवं,
'वर्णो', 'वृत्तिर्', 'जीविका' वा, 'पेशा', 'रोज़ी'-इति वा तथा;
पर्यायवाचकाः सर्वे शब्दाः स्युर् लोकसंग्रहे।

'वर्ण'-'सवर्णा' दि-शब्द-निरुक्तिः

निरुक्ति 'वर्ण' शब्दस्य, व्याकृतिः, श्रूयते, यथा—
समाजे स्थाननिर्देशाद् 'वर्णनात्' पुरुषस्य वै,
'आच्छादनान्' नरस्यापि श्वेत-कृष्णादि-'वर्ण'वत्,
विशेपवृत्ति-'वरणाद्', 'वर्ण' इत्यभिधीयते।
श्वेत-रक्त-पीत-कृष्ण-चतु'र्वर्ण'-विभेदतः,
कस्मिंश्चित् प्राक्तने काले स्युर् वर्णास्तु विवेचिताः,
"ब्राह्मणानां सितो वर्णः, क्षत्रियाणां तु लोहितः,
वैश्यानां पीतकश्चैव, शूद्राणां असितस्तथा"; (म०भा०)
न तु तत् साम्प्रतं सत्यं; सत्यं सत्त्वादि-भेदतः।
पातंजलमहाभाष्येऽप्येतदुल्लेखनं कृतं।
येपां समाना ननु जीविका स्याद् वृत्तं च, वृत्तिः, प्रकृतिश्च, कर्म,
भवंति ते एव मिथः सवर्णाः; न केवलं नामजात्या सवर्णाः।
समानशीलव्यसनेपु सख्यं, सहैव चाऽहार-विहार-भावः,
परस्परं चाऽपि विवाहधर्मः, सौख्यप्रदः स्यान्; न तु नेदृशानां।
न च तत्र बलात्कारो विवाहे वा सहाशने;
समानशीलताप्रीतिनीतिरेव नियामिका।

चतुष्कैर्धर्मसंग्रहः

'वेदो' हि तत्त्व-'विद्या' स्यात्, तज्जो धर्मस्तु 'वैदिकः';
'सनातनो' यद् आत्मा-एव, तज्जो धर्मः 'सनातनः',
"नित्यः सर्वगतः स्थाणुर् अचलोऽयं सनातनः"; (गी०)
'आर्याणां' सम्मतो यस्माद्, 'आर्य'धर्मः स एव हि;

सूक्ष्म-सात्त्विकया बुद्ध्या निर्णीतो, 'बौद्ध' एव सः ;
सर्वमानवकल्याणकारी, तस्माच्च 'मानवः' ;
'महद्-बुद्धि-मनो'ऽशानां अवतारेण चैव हि
प्रोक्तं भगवता यस्मान् 'मनुना',-ऽतश्च 'मानवः' ।
'मानव'स्याऽस्य धर्मस्य 'राजधर्मस्य' चैव हि ,
राज्ञश्च सर्वधर्माणां, राज्ञां धर्मस्य वै तथा ,
आन्वीक्षिकी-प्रसूतस्य 'राजगुह्यस्य' तत्त्वतः ,
सम्यक् च दर्शनस्याऽपि प्रजातस्य प्रयोगतः ,
चतुष्कैरेव कतिभिः संग्रहः क्रियतेऽधुना ।
चतुर्वर्णाश्रमाणां चाऽनुरोधाय चतुष्कता ;
न तु तत्राऽग्रहः कश्चिच् चतुष्कैः प्रतिपादने ;
यद् अत्र तत् कृतं, तत्तु सौकर्यायैव केवलं ;
द्विकैः, त्रिकैः, पंचकैश्च, षट्कैर्वा, सप्तकैश्च वा ,
पदार्थानां तु गणनं कृतमेव बुधैः पुरा ;
"प्रस्थानभेदाद् भेदः स्याद् दर्शनानां" इतीह दिक् ।
'आत्मा','ऽनात्मा' च, 'सम्बन्धो निषेधेन' तयोरपि ,
परात्मनि 'समाहारः'—सार्विकं तच्चतुष्टयं ,
वेदान्तस्य च निष्कर्षो ऽखिलानां मूलमेव च ।
सदैव सत्-चिद्-आनन्द-रूपस्य प्रत्यगात्मनः
गुणत्रयं च, नैर्गुण्यं च—स्याद् गुणचतुष्टयं ।
आदौ-अव्यक्तताऽवस्था प्रकृतेः प्रत्यगात्मनः ,
त्रैगुण्यं व्यक्ततायां चाऽपि-एवं गुणचतुष्टयं ;
"सत्त्वं-रजस्-तम इति गुणाः प्रकृतिसंभवाः" , (गी० )
मूलाऽवस्था च प्रकृतेः तुर्यो मूलगुणो भवेत् ।
आत्म-प्रकृत्योर्जातोऽयं शरीरी चित्तमुच्यते ;
चित्तस्याऽपि हि चत्वारो धर्माः संत्येव सर्वदा ,

ज्ञानं, इच्छा, क्रिया, निद्राऽव्यक्तता च चतुर्थिका ;
"सत्वं ज्ञानं, रजः कर्म, तमोऽज्ञानं (इच्छा) इह-उच्यते" ; (म०)
बुद्धिः सत्वं, अहंकारस्तमश् च,-एवं मनो रजः ,
चित्तं सर्वसमाहारः, चयनात्, स्मृतिधारणात्,
अखिलाऽनुभवानां तु भूत-भव्य-भविष्यतां ;
( 'क्रियाशक्तिरहंकारः' इति केचन मन्वते ,
'अहं-करोमीति' च ते शब्दं व्युत्पादयंति हि ;
अन्ये-'अहमं-करोति'-इति व्युत्पत्तिं, 'कुंभ-कार'वत्,
वरयंति; यतस्तु-'इच्छा'-मयोऽसौ पुरुषो हि-'अहम्' ;
"अहं-कारोऽभिमानोऽस्ति, मनः संकल्पकं तथा" , (सां० का०)
'अहं-भावो', 'ऽस्मिता', 'ऽहंता', पर्यायाः खलु-'अहं-कृतेः' ;
'अहंतायाः' घनीभावो, दार्ढ्यं, च 'नियमः', 'स्थितिः' ,
'मोहः', 'आवरणं', 'बंधः'—सर्वे 'इच्छा'-फलं खलु ;
क्रियाशक्तिर्मनोऽतः स्याद्, इच्छाशक्तिरहंकृतिः ।
'प्रख्या-प्रकाशो-ज्ञानं' च, 'प्रवृत्तिः-चलनं-क्रिया' ,
सांख्ये योगे 'मोहः-इच्छा-ऽऽवरणं-नियमः-स्थितिः'—
गुणत्रयाणां धर्माणां एते पर्यायवाचकाः ।
( सां०-का०; यो० सू०-भा०; गी० )
यथा चित्ते तथा देहेऽप्यस्ति तादृक् चतुष्टयं—
गुणः, द्रव्यं च, कर्माऽपि, तथा ऽभावस्य भासनं ।
एकैकगुणवैशेष्यात्, प्रकृतीनां चतुष्टयं ;
"वैशेष्यात् तु-एव तद्वादस्तद्वाद" इति सूत्रितं; ( ब्र० सू० )
"भूयसा व्यपदेशः" स्यादिति नैयायिकं मतं ;
सत्त्वादिगुणवैशेष्याद्, अनुद्बुद्धतया तथा ,
चातुर्विध्यं मनुष्येषु प्रकृतीनां प्रजायते ;
केचित् सत्त्वाधिकाः, केचित् भवंत्यथ रजोऽधिकाः ,

केचित्तमोऽधिकास्त्वा,ऽन्ये ऽनभिव्यक्तगुणास्तथा ।
चत्वारश्चैव वर्णाः स्युः । चत्वारश्चाश्रमाः पृथक् ।
चतुर्विधास्त्र तद्धर्माः । चत्वार्यैव वयांसि च.
युवत्वं चा,ऽथ प्रौढत्वं, वार्धक्यं च, जरा तथा :
सत्वं-ज्ञानं-'ब्रह्मचर्यं', तमः-इच्छा-'गृहं' तथा,
रजः-क्रिया-'वनं'-यज्ञः, 'सन्यासो' निर्गुणः स्मृतः ।
चत्वारः पुरुषार्थास्त्र, 'चतुर्वर्गं' इति स्मृताः :
"तमसो लक्षणं कामः, रजसस्त्वर्थ उच्यते,
सत्त्वस्य लक्षणं धर्मो", मोक्षो निस्त्रिगुणः स्मृतः । (म०)
अधिकाराश्च चत्वारः कर्त्तव्यानि तथैव च :
धर्म-निर्णयनं, दुष्टदंडनं, धनसंचयः,
भृतिलाभः—चतुर्णां खल्वधिकारा इमे क्रमात् :
ज्ञानप्रचारणं, रक्षाकरणं, दानपोषणे,
सेवनं, चेति तेषां तु कर्त्तव्यानि क्रमात्तथा ।
राशिषु-अपि-एषणानां च, चतस्रो मानसैषणाः :
शारीरेच्छाश्चतस्रश्च: हृदयाऽप्यायनानि च,
चत्वार्येव भवंतीह तोषणानि मनीषिणां :
लोक-वित्त-एषणे चैव, तथा दार-सुत-एषणा,
मोक्षैषणा चतुर्थी स्याद् या मुमुक्षाऽभिधीयते :
'स्थानं मानो भवेल्लोके मम'—लोकैषणा हि सा :
'सम्पत्तिश्च, समृद्धिश्च. विविधाश्च परिग्रहाः,
शोभनानि च वस्तूनि स्युर्मे'—वित्तैषणा हि सा :
'दाम्पत्यं चाऽत्यपत्यानि, तथा परिजनाः बहु,
स्युर्मम, ईश्वरता च-एषु स्यात्'—सा दार-सुतैषणा,
'सर्वद्वंद्वैर्विमुक्तः स्याम्, स्वच्छंदः सर्वथैव च,
ना-'ऽन्य'स्य बंधने ऽहं स्याम्' इति मोक्षैषणा मता :

'अहं स्याम्', 'बहु चाऽहं स्याम्', 'बहु-धा स्याम् अहं' तथा,
'सर्वमप्यहमेव स्याम्'—रूपं तासां क्रमाद् इदं ;
'अहमेव हि सर्वः स्याम्', 'न स्यात् किंचिद् अपि-इतरत्',
'स्वे महिम्नि स्थितोऽहं स्याम्', 'स्यात् सर्वं हि मयि स्थितं',
'नाऽल्पः कथंचनाऽपि स्याम्, भूमा स्यामेव सर्वथा',
"यत्र नाऽन्यत् × स भूमा" स्यात्', "यो वै भूमाऽमृतं हि तत्", (उ०)
—मोक्षैषणायाः रूपस्य सर्वं विवरणं त्विदं।
'अस्मिता'द्वयरूपाणि-एव-एषणानां चतुष्टयं ;
प्रातिस्विकी-अस्मिता त्वेका, या जीवात्मनि वर्त्तते ;
सार्वस्विकी-अस्मिता चाऽन्या, 'ऽहंब्रह्माऽस्मी'ति भाव्यते।
सुखं, दुःखं च, रागश्च, द्वेषाश्च—अन्यच्चतुष्टयं,
वैयक्तिकाऽस्मिताजन्यं, क्षोभाणां जनकं भृशं।
लोभो, भयं (मोह इति), मदो, मत्सर एव च,—
कामक्रोधोद्भवं चैतन् मुख्यक्षोभचतुष्टयं।
सम्मानं च, तथैश्वर्यं, वित्तं च सुपरिष्कृतं,
ब्रह्मत्वं परमैश्वर्यं—इति, एषणचतुष्टये,
मानसे, विषयान् आहुः; तत् तोषणचतुष्टयं।
दैहिकं चापि तत्रास्ति तादृग् इच्छाचतुष्टयं—
"आहारेच्छा, धनेच्छा च, रतीच्छाऽपि" शरीरिणां, (देवीभा०)
चतुर्थी दैहिकी चेच्छा स्वास्थ्य-विश्राम-कामना।
चतस्रो जीविकाश्चापि. चतस्रो वृत्तयस्तु याः,
शिक्षणं-याजना-ऽदाने, शस्त्रास्त्राणां च धारणं,
कृषि-गोरक्ष-वाणिज्यं, अन्येषां सेवनं तथा। (म०)
आहाराश्चापि चत्वारः सात्त्विकादिविवेकतः। (गी०)
विवाहाश्चापि चत्वारः तथैव गुणभेदतः ;
ब्राह्मो, दैवः, तथा चाऽर्षः, प्राजापत्यश्च, ते स्मृताः

सात्त्विकाः; राजसौ तत्र मतौ गांधर्व-राक्षसौ ;
आसुरस्तामसो; घोरः पैशाचो वर्ज्य एव हि ,
पापिष्ठश्च निषिद्धश्च दंड्यश्चापि चतुर्थकः । (म०)
अपराधाश्च चत्वारः; चत्वारश्चापराधिनः ;
दंडाश्चतुर्विधाश्चापि, प्रकृतीनां विभेदतः—
प्रायाश्चित्तात्मको, अंगानां छेदनं वेधनं व्यधः ,
धनदंडो, ऽथ कारायां बन्धनं दासता वधः ।
"वाग्दंडं प्रथमं कुर्यात्, धिग्दंडं तदनन्तरं ,
तृतीयं धनदंडं तु, बधदंडमतः परं" ; ( म० )
"धिग्दंडो ब्राह्मणानां स्याद्, क्षत्रियाणां भुजाऽर्पणं ,
धनदंडऽश्च वैश्यानां, शूद्राणां देहदंडनं" ; ( म० भा० )
"क्षत्रियो बाहुवीर्येण तरेद् आपदं आत्मनः ,
धनैर् वैश्यः", श्रमैः शूद्रः, "विप्रो होमजपादिभिः" (म०)
सत्त्विनां अपमानेन; दुष्करेषु नियोजनैः
रजस्विनां तु कार्येषु; धनापहरणात् तथा
तमस्विनां; अनुद्बुद्धशरीरे खलु—दंडनं ।
बलं चतुर्विधं चापि, शास्त्र-शस्त्र-धन-श्रमाः ।
परिग्रहाश्च चत्वारः । विनोदाश्च चतुर्विधाः ।
आयुर्वेदे चतस्रश्च मुख्याः प्रकृतयः स्मृताः ;
तिस्रः प्रसिद्धाः सन्त्येव, स्यादव्यक्ता चतुर्थिका ;
चिकित्साश्चापि तद्भेदात् तावत्यः स्युरसंशयं ;
पित्तं सत्वं, रजो वातः, तथैव च कफस्तमः ,
अनभिव्यंजनं बाले, चिकित्साऽस्य पृथक् ततः ।
अग्निः पित्तं, तथा वातो वायुः, श्लेष्मा जलं स्मृतं ,
तेषां च साम्यावस्था या स्वास्थ्ये, भावश्चतुर्थकः ।
अग्निः सत्त्वं प्रकाशित्वात्, चंचलं पवनो रजः ,

तामसं सलिलं चैव, पृथिवी सर्वधारिणी।
बिंदुर्, व्यासश्च, वृत्तं च, खं च—ज्योतिश्चतुष्टयं।
एकं, नाना च, त्रैराश्यं, शून्यं च—गणिते युगं।
साम, दानं, भेद-दंडौ—नीतिरीतिश्चतुर्विधाः;
"यथैव रक्षःसु न साम युज्यते, तथाऽर्थपूर्णेषु न दानमिष्यते,
बलेन दृप्तेषु न भेदसंभवश्, चतुर्थ एवात्र ततो विधीयते",(वा०रा०)
इति प्रवीरस्य हनूमतो वचः सुधीमतो रावणपूःप्रभंजने;
साम सत्त्वं, रजो दानं, भेदः स्यान्मोहकं तमः,
दंडस्तु सर्वसंग्राही सर्वेषां प्रतिभूः स्मृतः।
देवताः—परमा माया, गौरी, वाणी च, पद्मजा;
देवाश्चापि—परब्रह्म, शिवो, विष्णुः, चतुर्मुखः;
इच्छाशक्तिर्-उमा प्रोक्ता, क्रियाशक्तिस्तथा-इन्दिरा,
ज्ञानशक्तिर्-गिरा ज्ञाता, महाशक्तौ समाहृताः;
रजोऽधिकः स्मृतो ब्रह्मा, ज्ञानशक्त्या च संगतः;
विष्णुस्सत्त्वाधिकश्चापि क्रियाशक्त्या विवाहितः;
तमोऽधिको महादेवः संसृष्टः सर्वदा-'उमया';
सर्वेऽपि देवीदेवास्तु परात्मनि समाहृताः।
"एकाऽक्षरं परं ब्रह्म, प्राणायामः परं तपः,
सावित्र्यास्तु परं नास्ति, मौनात्सत्यं विशिष्यते।
आद्यं यत् त्र्यक्षरं ब्रह्म, त्रयी यस्मिन् प्रतिष्ठिता,
स गुह्योऽन्यस्त्रिवृद् वेदो, यस्तं वेद स वेदवित्।
उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः,
सकल्पं सरहस्यं च, तमाऽचार्यं प्रचक्षते;
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना,
तपो विशेषैर्विविधैः, व्रतैश्च विधिचोदितैः;
धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः,

ते शिष्टा ब्राह्मणाः ज्ञेयाः श्रुतिप्रत्यक्षहेतवः" ; (म०)
"एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयं ,
तस्माद् बहुश्रुतः शास्त्रं विजानीयात् प्रयत्नतः ;
सर्वशास्त्रार्थवेत्तारं अपि योग्यां तु कारयेत् ,
कर्मस्वयोग्यो भवति सोऽन्यथा, ऽपि बहुश्रुतः" ; (सुश्रुतं)

"अध्यापयंति यदि दर्शयितुं क्षमंते
सूतेन्द्रकर्मगुरवो, गुरवस्त एव ;
शिष्यास्त एव रचयंति पुरो गुरूणां ;
शेषाः पुनस्तदुभयाऽभिनयं भजंते" ।
( आयुर्वेदप्रकाशः )

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ,
बिभेत्यल्पश्रुताद्वेदो—माम् अयं प्रहरिष्यति ;
सच्छास्त्राणि तु सर्वाणि वेद एव हि सर्वशः ;
वेदस्योपनिषत् सत्यं, सत्यस्योपनिषद् दमः ,
दमस्योपनिषन्मोक्षो"(म० भा०) भयेभ्यः सर्वथा सदा ,
सर्वशंकानिरासश्च, 'स्व'-स्थता, शांतिरेव च ।
'अ':-तु-'आत्मा', 'उः'-तथा'ऽनात्मा', 'मः' 'सम्बन्धो निषेधनैः' ,
'अस्मी'ति 'ब्रह्मसत्ता' च, यस्यां सर्वं समाहृतं ;
'अ' कारो 'ऽहं' तु सत्त्वं स्याद्, 'उ' स्-तु-'एतद्' रज उच्यते,
'म' कारो 'न' तमोभूतः, प्रणवे ते समाहृताः ;
एकाक्षरोपि प्रणवः, त्र्यक्षरश्चापि दृश्यते ;
'अ' कारस्तु-'अहं'-आत्मा स्याद्, 'उ'स्-तु-'एतत्' सकलं जगत् ,
'म' कारस्तु 'न' कारः स्याद्, 'इः' शक्तिर् याऽस्ति नाऽस्ति च ;
'इ'कारः शक्तिरेव स्याद्, अन्तर्लीना हि सा त्रिषु ,
माहेश्वरेण सूत्रेण 'अ-इ-उ-म् ( ण् )' एतेन दर्शिता ;
"यावन्नोत्पद्यते सत्या बुद्धिर् 'न-एतद्-अहं', यया

'न-एतन्-मम'-इति विज्ञाय, ज्ञः सर्वं अधितिष्ठते", ( चरक० )
तावच्छान्तिर्न सम्भाव्या, तावन्मोक्षो न लभ्यते।
"न मोक्षो नभसः पृष्ठे न पाताले न भूतले ,
सर्वतृष्णाक्षये चेतःक्षयो मोक्ष इति श्रुतिः"।
" न नाकपृष्ठे, न महेन्द्रधिष्ण्ये, न नागलोके, न रसातले वा ,
न पर्वताऽग्रे, न समुद्रगर्त्ते, न चाष्टसिद्धिषु, 'अन्-इदं' हि मोक्षः"।
"इत्यभिष्टूय पुरुषं यद्रूपं 'अन्-इदं' यथा ,
ब्रह्मेशानौ पुरोधाय देवाः प्रतिययुर् दिवं"; (भा० स्कं० १० अ० २)
" 'इदं'-बुद्धिश्च बाह्यार्थे तु,-'अहं'-बुद्धिस्तथाऽत्मनि ,
प्रसिद्धा सर्वजन्तूनां; विवादो नेह कश्चन ;
यत्र यत्र-'इदं'-इत्येषा बुद्धिर् दृष्टा स्वभावतः ,
तत्र तत्र तु-'अनात्म'त्वं विज्ञातव्यं विचक्षणैः ;
'शरीरे' दृश्यते सर्वैः 'इदं'-बुद्धिः, तथैव च
'अहं'-बुद्धिश्च, विप्रेन्द्राः, ततस् ते भिन्नगोचरे ;
'शरीरा'ऽलम्बना बुद्धिर् 'इदं' इति-,आस्तिकोत्तमाः ,
चिद्-'आत्मा'ऽलम्बना साक्षाद् 'अहं'-बुद्धिर्, न संशयः ;
'इदं'-अर्थे शरीरे तु या 'ऽहं' इति-उदिता मतिः ,
सा महाभ्रांतिर् एव स्यात् 'अ-तस्मिन्स्-तद्'-ग्रहत्वतः"। (सूतसं०)
यदेव-'इदं' तदेव-'एतत्' समीपतरवर्त्ति च;
"इदमस्तु सन्निकृष्टं, समीपतरवर्त्ति च-एतदो रूपं ,
अदसस्तु विप्रकृष्टं, तदिति परोक्षे विजानीयात्"। ( व्या० )
'अहं'-'एतन्'-'न'-कारः च प्रणवेन त्रयोऽपि ते ,
त्र्यक्षरैकाक्षरेणापि कथ्यंते 'ब्रह्म'रूपिणा।
"ओंकारः, प्रणवः, तारः, प्रातिभः, सर्वविन्मतिः ,
उद्गीथः, तारकश्चापि, नामानि-अस्य भवंति हि"।
"तस्य वाचकः प्रणवः; तत्र निरतिशयं सर्वज्ञबीजं ;

प्रातिभाद् वा सर्वं"। (योगसू०)

"उच्चार्यमाण एव संसारभयात्तारयति तस्मात्तारः" (उ०)

"अक्षरं प्रणौति"; (छां०उ०); "सर्वं ज्ञानं प्रकर्षेण नवीकरोति" :

"अवतीति ओम्"; (व्या०)

ज्ञानेनैकेन चैतेन ज्ञायंतेऽपि त्रयो यतः,

तस्मात् 'सर्वज्ञता-बीजं', त्र्यक्षरं ब्रह्म चाऽपि-असौ।

ब्रह्म-'अहं' "अन्यद् अन्यस्मात्, अनन्यत्वात् (सदैव हि):

"अन्-अन्यद् इति(शब्देन तु-)अन्यताऽऽभावः(उच्यते)"—

प्रहेलिकामयं न्यायसूत्रं एकं इदं तथा,

तमेवार्थं निषेधीयं वक्तिः नैव तु भाष्यते

वात्स्यायनेन यदपि, नाऽन्योऽर्थस्तत्र युज्यते।

'अहमेवाऽस्मि, नाऽन्यत्तु किंचिदप्यस्ति कुत्रचित्',

" 'मत्'-तः परतरं किंचिन् 'नाऽन्यद्' अस्ति, धनंजय;

'मयि' सर्वम् 'इदं' प्रोतं, सूत्रे मणिगणाः इव" ; (गी०)

" 'नाऽन्यत्' पश्यति यत्राऽयं स भूमा, ऽमृतमस्ति तत्" (छां०उ०)

"आत्माऽनुवीक्ष्य 'नाऽन्यत्' (तु तदा) अपश्यद्" (अथाऽऽत्मनः)";

(बृ० उ०)

"त्रिगुणं च, त्रितत्त्वं च, त्रयो देवाः, त्रयोऽग्नयः,

त्रयाणां च त्रिमूर्तिस्त्वं, तुरीयस्त्वं, नमोऽस्तु ते"(आदित्यस्तो०)

"त्रयी, तिस्रो वृत्तीः, त्रिभुवनं, अथो त्रीन् अपि सुरान्,

अकाराद्यैर्वर्णैः त्रिभिर्-अभिदधत्, तीर्णविकृति,

तुरीयं ते धाम ध्वनिभिर्-अवरुन्धानं अणुभिः,

समस्तं व्यस्तं त्वां, शरणद, गृणाति-'ओं'-इति पदं" ।(महिमस्तु०)

महिमा प्रणवस्यैवं वेदे गीतः पदे पदे।

मांडूक्याद्युपनिषत्सु, गोपथब्राह्मणादिषु,

अन्यग्रन्थेषु चैवापि सूचिताः बहवः त्रिकाः।

त्रयः तुल्याऽधिकारास्ते, तुल्यसम्मानगौरवाः,
संसृष्टाश्च सदाऽन्योऽन्यं, न पृथग्भवितुं क्षमाः,
न कश्चिद् अधरो वाऽपि, न च कश्चित् तथा-उत्तरः,
त्रिष्वेतेषु गुणेष्वत्र; सत्कार्ये, ऽसति वा पुनः,
प्रयोगेण, शुभत्वं वा, ऽशुभत्वं वा,ऽभिजायते।
यद् रजस्तमसी प्रायो निंद्येते, तत्तु रूढितः,
सत्त्वस्याऽभिभवात् ताभ्यां, अतिमात्रतया तथा।
पूर्वमुक्तं, त्रयो देवाः सात्त्व-राजस-तामसाः;
जगत्स्थित्यै प्रवृत्तस्तु तामसो हि भवः शिवः,
संहाराय स एवास्ति रुद्रः कालो ग्रहो हरः;
अन्नपूर्णा च गौरी च सर्वकल्याणकारिणी,
इच्छा-तमोमयी, सैव कालिका सर्वमारिणी;
"वहलरजसे विश्वोत्पत्तौ भवाय नमो नमः,
प्रवलतमसे तत्संहारे हराय नमो नमः,
जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः,
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः"। (महिमस्तु०)
जाग्रत्, स्वप्नं, सुषुप्तिश्च, तुर्या—ऽवस्थाचतुष्टयं।
भूः, भुवः, स्वः, चिदाकाशः—इति लोकचतुष्टयं;
अग्निः, सोमश्च, सूर्यश्च, तमश्च तमसः परः,
प्रकाशानां परा काष्ठा, यद्भासा भासितं जगत्—
'रहस्य'-'संध्या'-भाषायां तदेव-एतच्चतुष्टयं।
स्थूलं, सूक्ष्मं, कारणं च, सर्वथाऽव्यक्तमेव च—
वैराजः, सौत्रः, ऐशश्च, पारमात्मिक एव च—
वैश्वानरश्च, हैरण्यः, सार्वज्ञो, ब्राह्म एव च—
विश्वश्च, तैजसः, प्राज्ञः, सर्वव्यापी तुरीयकः—
एतच्चतुष्कं देहानां, वेदान्तपरिभाषया,

व्यष्टीनां च समष्टीनां, वैशेष्यात् च समानतः।
"आन्वीक्षिकी, त्रयी, वार्त्ता, दंडनीतिश्च शाश्वती"—(म०;शु०की०)
अहर्निशं नृपाऽभ्यस्यं एतद् विद्याचतुष्टयं;
मानानां समस्तानां समानाऽन्वीक्षिकी मता,
शिक्षकस्य त्रयी, दंड-नीतिः स्याद् रक्षकस्य च,
वार्त्ता भूयः पोषकस्य, विद्या प्रोक्ता विशेषतः।
'विशेषतः' इति स्मर्यं; एकान्तत्वं नहि क्वचित्,
'एतदि' 'इदमि' 'दृश्ये' तु 'जगति'-आपेक्षिकेऽखिले;
एकान्तं निर्गुणं ब्रह्म, यस्मिन् 'द्वं-द्वं' लयं गतं;
'एतद्' द्वंद्व-मयं सर्वं, त्रिकाः यत्र विभांति ते,
'न' कारेण निषिद्धाश्च, प्रणवस्य चतुष्टये।
व्यापित्वाद् आत्मनो नूनं भूतेषु सकलेष्वपि,
द्वंद्वान्वितेषु सृष्टेषु चात्मनः प्रकृतेर्गुणैः,
सर्वं सर्वेण सम्बद्धं, "सर्वं सर्वत्र सर्वदा";
"सर्वे एव समाः, सर्वे एवाऽनन्ताः", असंशयं; (बृ०उ०)
"नहि गतिरधिकास्ति कस्यचित्, सकृदुपदर्शयतीह तुल्यतां";
(म० भा०)
"इन्द्रस्याऽशुचिशूकरस्य च सुखे दुःखे च नास्त्यंतरं,
स्वेच्छाकल्पनया तयोः खलु सुधा विष्ठा च भोग्याशनं,
रम्भा चाऽशुचि शूकरी च परमप्रेमास्पदं, मृत्युतः
संत्रासोऽपि समःस्वकर्मगतिभिश्चान्योन्यभावः समः।
(भर्तृहरि०)
"अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः;
महाभूतानि नित्यानि भूताधिपतिसंश्रयात्"; (म०भा०)
"द्वंद्वैरयोजयच्चेमाः सुखदुःखादिभिः प्रजाः"; (म०)
"वैशेष्यादेव तद्वादो तद्वादः" इति निश्चितं। (ब्र० सू०)

चत्वार्येव मनुष्याणां सहजानि ऋणान्यपि,
देवानां च, ऋषीणां च, पितृणामपि वै तथा;
दानात्तु पंचभूतानां, ज्ञानविज्ञानदानतः,
सेन्द्रियाणां शरीराणां अपि दानात् तथा, क्रमात्;
जीवदानाच् चतुर्थं तु ऋणं स्यात् परमात्मनः।
चत्वारश्च प्रकारास्ते ऋणनिर्मोचनस्य वै;
इष्टाऽपूर्त्तं च विविधं, प्रजाभ्यो ज्ञानशिक्षणं,
सन्तानपालनं चैव, तथा मोक्षस्य चिन्तनं;
"ऋणानि त्रीणि-अपाकृत्य मनो मोक्षे निवेशयेत्;
अनपाकृत्य तान्येव मोक्षमिच्छन् व्रजत्यधः;
अधीत्य विधिवद् वेदान्, पुत्रांश्चोत्पाद्य धर्मतः,
इष्ट्वा च शक्तितो यज्ञैः, मनो मोक्षे निवेशयेत्;
आश्रमाद् आश्रमं गत्वा, हुतहोमो, जितेन्द्रियः,
भिक्षाबलिपरिश्रान्तः, प्रव्रजन् प्रेत्य वर्धते"। (म०)
कर्म सर्वजनीनं यत् तत् सर्वं 'यज्ञ' उच्यते।
'आपूर्त्तं' अस्ति वृक्षाणां छिन्नस्थानेषु रोपणं;
'जला'शयानां कूपानां तटाकानां च निर्मितिः;
द्रव्यैः सुगंधिभिर्धूपैः 'पवनस्या'ऽपि पावनं
दूषितस्य मनुष्याणां नित्यं श्वासादिकर्मभिः;
उदारभावपूर्णाभिः, आश्रिताभिः श्रुतेः ऋचः,
मंत्रध्वनिभिर् 'आकाशः', संगीतैर्मधुरैस्तथा,
( दुर्भावैश्चापि दुःशब्दैः, रागद्वेषवशानुगैः,
दूष्यते मनुजैर्नित्यं शब्दाधारो यः आदिमः, )
आर्यैस्तु वेदविद्वद्भिः पूयते ऽहरहो बुधैः;
हविष्यैः 'कृष्णवर्त्मा' च; 'पृथ्वी' हरितरोपणैः,
खनिता बहुधा चापि कृषकैरूषरीकृता—

एवं विकृतभूतानि संस्क्रियन्ते विपश्चिता।
"देवान् भावयताऽनेन, ते देवा भावयंतु वः,
परस्परं भावयंतः श्रेयः परमवाप्स्यथ;
तैर्दत्तान् अप्रदायैभ्यो यो भुंक्ते स्तेन एव सः"; (गी०)
पंचभूतानि भुज्यंते मनुष्यैस्तु दिवानिशं,
तेषां पुष्टिस्तु देवानां ऋणनिर्यातनं स्मृतं;
'दीव्यन्त्यः' शक्तयो 'देवाः' महाभूताभिमानिनः।
यवीयेभ्यो ज्ञानदानाद्, शिक्षकैश्चापि दापनात्,
पोषणात् शिक्षकाणां च, ऋणं आर्षं विशोध्यते।
जननात् सदपत्यानां, भरणाद्, रक्षणादपि,
तथा च विनयाऽधानाद्, ऋणं पैत्र्यं विमोच्यते।
"अध्यापनं ब्रह्मयज्ञः, पितृयज्ञस्तु तर्पणं,
होमो दैवो, बलिर्भौतो, नृयज्ञोऽतिथिपूजनं", (म०)
एते पंचमहायज्ञाः, ऋणनिर्मोचनेषु वै
तेष्वेव,-अंतर्गताः ज्ञेयाः, कर्त्तव्याश्च दिने दिने।
आत्मसूक्ष्मगतेर् नित्यं सर्वदेहिषु चिंतनात्,
उच्चावचेषु भूतेषु,-अज्ञेयायाः अकृताऽत्मभिः,
स्वान्तरात्मगतेश्चैव ध्यानयोगेन दर्शनात्, (म०)
शुभध्यानाच्च सर्वेषां, भूतप्रियहितेहया,
आत्मनः सर्वभूतेषु भगवद्भावदर्शनात्, (भा०)
आत्मवत्सर्वभूतेषु तथैवाचरणात् सदा,
ऋणं निर्यात्यते सर्वं यदुक्तं पारमात्मिकं।
"यस्तु सर्वाणि भूतानि आत्मन्येवाऽनुपश्यति,
सर्वभूतेषु चात्मानं, ततो न विजुगुप्सते"। (उ०)
"अनेन विधिना सर्वास्त्यक्त्वा संगाञ्छनैः शनैः
सर्वद्वंद्वविनिर्मुक्तो ब्रह्मण्येवाऽवतिष्ठते"। (म०)

चतुष्टयानि-उपासानां अपि स्मर्याणि संति वै—

"पूजाकोटिसमं स्तोत्रं, स्तोत्रकोटिसमो जपः,
जपकोटिसमं ध्यानं, ध्यानकोटिसमो लयः।
बाह्यपूजाऽधमो भावो, मध्यमस्तु स्तुतिर्जपः,
उत्तमो ध्यानभावस्तु, ब्रह्मभावः कृताऽत्मनः।
अधमास्तु प्रियारामाः, शास्त्रारामास्तु मध्यमाः,
उत्तमाः धारणारामाः, आत्मारामः कृतात्मनः।
अधमाः कर्मभीतास्तु, भक्तिभीतास्तु मध्यमाः,
उत्तमाः ज्ञानभीतास्तु, नाऽस्ति भीतिर्महात्मनः।
अधमस्तु कुलाचारः, शौचाऽचारस्तु मध्यमः,
उत्तमो नियमाचारः, स्वेच्छाचारः कृतात्मनः।
अधमः कर्मभावस्तु, भक्तिभावस्तु मध्यमः,
उत्तमो ज्ञानभावस्तु भावोऽतीतः कृतात्मनः।
अधमो देहभावस्तु, जीवभावस्तु मध्यमः,
उत्तमः साधुभावस्तु, सोऽहंभावः कृतात्मनः।
अधमाः 'इमं' इच्छंति, 'परं' इच्छंति मध्यमाः,
उत्तमाः 'मोक्षं' इच्छंति, नैवेच्छाऽस्ति कृतात्मनः।
होमयात्राऽधमा, पूजा प्रतिमानां तु मध्यमा,
उत्तमा ध्यानिकाऽवस्था, सहजा भावितात्मनः।
बालानां काष्ठलोष्ठेषु, मनुष्याणां तथाऽप्सु च,
मनीषिणां द्योषु देवाः, बुधस्याऽत्मनि देवता।" (पु०)

परस्परभयात् केचित्पापाः पापं न कुर्वते,
राजदंडभयाद् अन्ये, यमदंडभयात्परे,
आत्मदंडभयादेव निष्पापत्वं कृतात्मनः। (म० भा०)

जीवस्योत्कर्षणे संति चत्वारः तु-ईदृशाः क्रमाः;
न तु तैः अद्य नीयन्ते आरोहणपथे प्रजाः,

शिक्षकैः रक्षकैः वाऽपि स्वार्थसाधनतत्परैः ;
प्रत्युत-एते -ऽपकृष्यंते- ऽवारोहणपथे जनाः ।
"गुरवो बहवः सन्ति शिष्यवित्ताऽपहारकाः ;
गुरवो विरलाः ते ये शिष्यसंतापहारकाः" । (गुरुगी०)
अस्यैव हि फलं नूनं, हिन्दू 'धर्मान्' विहाय यद्
विकृतान्, बहवो यान्ति परधर्मान् दिने दिने ।
"यदाभूतपृथग्भावमेकस्थमनुपश्यति ,
ततएव च विस्तारं, ब्रह्म सम्पद्यते तदा" । ( गी० )
धर्मशास्त्रं, अर्थशास्त्रं, कामशास्त्रं तृतीयकं ,
मोक्षशास्त्रं चतुर्थं चाऽपि—एतच्छास्त्रचतुष्टयं ;
सर्वाण्यपि च शास्त्राणि चतुर्ष्वन्तर्गतानि हि ;
प्राच्यर्वाची न सा विद्या या ह्येतेभ्यो बहिः स्थिता ।
"द्वे विद्ये वेदितव्ये वै", मुंडकेष्विति गीयते,
"परा यथाऽक्षरं ब्रह्म तच्छुक्रमधिगम्यते," (उ०)
तथाऽपरा यया सर्वमन्यद् आसाद्यते नृभिः;
मोक्षशास्त्रात्मिकाऽऽद्या तु, द्वितीया त्रितयाऽत्मिका ।
आन्वीक्षिकी मोक्षशास्त्रे, धर्मशास्त्रे त्रयी स्मृता ,
अर्थशास्त्रे दंडनीतिः, वार्त्तायां काम एव च ।
शक्योऽन्यथा विभागश्च; नैकरीत्यां तथाऽऽग्रहः ।
दक्षिणाश्च, करश्चापि, वृद्धिश्च, भृतिरेव च ,
चतुर्विधं स्मृतं मूल्यं चतुर्णां वर्णकर्मणां ।
यथा-एव तु मनुष्याणां जीविकाकर्म-'वर्णनात्'
चतुर्धा प्रविभक्तास्ते 'वर्णाः' प्रोक्ताः जनैरिति ,
'वर्णनात्' चित्तवृत्तीनां, 'वर्ण'-मालाऽक्षराणि वै ,
'वर्णाः' इत्यभिधीयन्ते, स्वरादीनि तथैव हि ;
स्वरो,ऽनुस्वार एवापि, विसर्गो, व्यंजनं, तथा;

—अक्षराणां समाम्नायस्यैतद् 'वर्ण'चतुष्टयं ;
'स्वं' रातीति स्वरः प्रोक्तः, व्यंजनं तु व्यनक्ति तं ,
अनुस्वारः स्वरस्याऽनु, विसर्गेण विसर्जनं ;
"स्वराश्च 'ब्राह्मणाः' ज्ञेयाः, वर्गाणां प्रथमास्तथा ;
द्वितीयाश्च तृतीयाश्च चतुर्थाश्चापि 'भूमिपाः' ;
वर्गाणां पंचमाः वैश्याः, अंतस्थाश्च तथैव च ;
ऊष्माणश्च हकारश्च शूद्रा एव प्रकीर्त्तिताः" ;(याज्ञ०शिक्षा०)
जीवात्मनस्तु प्रकृतेर् व्यक्तायाश्च चतुर्विधं
अंजनाद् 'अंग'भूतास्ते, शिरो-बाहू-दर-क्रमाः ,
ज्ञान-क्रिये-च्छा-ऽनुबुद्धि-वृत्तीनां 'अक्ति'-साधनाः—
चतुर्धर्मेकमेवं स्याद् एतद् अंगचतुष्टयं ।
आदौ-आवश्यकीयानि, निकामीयानि वै ततः ,
विलासीयानि, सन्न्यस्यानि-इति—वस्तुचतुष्टयं ।
यथा मनुष्येषु, तथा मणिवृक्षपशुष्वपि ,
देवेष्वपि च, सर्वत्र त्रैगुण्यात् तु चतुष्कता ;
"श्वेता ब्राह्मणमृत्तिका ।" ; (शिल्पदीपिका०)
"ब्राह्मणाः दृषदः स्निग्धाः श्वेताः पंकजसंनिभाः";(वास्तुसार०)
"विवेकी-अश्वो घृणी विप्रः, तेजस्वी क्षत्रियो बली ,
कोष्णभावो भवेद्वैश्यः, शूद्रो निस्सत्त्वको भवेत्"; (अश्वविद्या०)
"शुभ्राः दीर्घाः स्तब्धकर्णाः लघुपुच्छाः तनूदराः ,
सुशुक्लनखदंताश्च, श्वानस्ते ब्रह्मजातयः" ;
एवं गजाः, वृषाः, मेषाः, अजाश्च, महिषादयः ,
काष्ठानि, धातवो, वृक्षाः, पक्षिणः, देव-देवताः ,
नद्यः, तीर्थानि, शास्त्राणि, गंधर्वोरगराक्षसाः ,
दैत्याः, वेदाः, पुराणानि, रत्नान्यपि तथैव च ,
चतुर्धा प्रविभक्तानि, गुणैरेव; न जन्मतः ; (तै० सं०)

पुरुषं "ता अपृच्छातां; 'कोऽसी'ति ? 'ब्राह्मणः' तु-इति ;
'कतमो ब्राह्मण' ? इति" पृष्टे चैवोत्तरं ददौ—
"किं ब्राह्मणस्य पितरं, किमु पृच्छसि मातरं ?
श्रुतं चेद् अस्मिन् वेद्यं, स पिता, स पितामहः" ;
( काठकब्राह्मणं, २-३०-१ )
"एतादृशाः गुणाः यस्य, तं देवा ब्राह्मणं विदुः"—
व्यासेन बहुधैवं तु वर्णः प्रोक्तो; न जन्मना ।
"न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ,
सत्त्वं प्रकृतिजैः मुक्तं यत्-स्याद्-एभिः त्रिभिः गुणैः" ; ( गी० )
यथैव शास्त्रमध्यात्मं, साहित्ये संस्कृते तथा
सर्वाणि-अन्यानि शास्त्राणि व्याप्तान्येव गुणैस्त्रिभिः ;
मनुस्मृतौ च गीतायां तथा-उक्ताः बहवः त्रिकाः :
एतेषां सुविवेकेन, कृत्येषु, प्रकृतिष्वपि ,
विभागेनाऽधिकाराणां, कर्त्तव्यानां तथैव च,
तथैव सुखदुःखानां, तथैव श्रमलाभयोः ,
( ईदृक्श्रमस्य चैव-एतन्मूल्यं स्याद्, इति योजनात् ,
न विना-एतच्छ्रमं मूल्यं एतल् लभ्यं भवेद् इति ,
एतत्सुखस्याऽनुबंधि दुःखं च-एतद् भविष्यति ,
एतद् दुखं विना कश्चित् सुखमेतन्न लप्स्यते; )
सम्यक् सर्वमनुष्येषु सुव्यवस्था प्रवर्त्स्यति;
सर्वेषां चाऽपि भावानां भविष्यति समन्वयः ;
सर्वे पदार्था लप्स्यंते स्वं स्वं स्थानं यथोचितं ।
एवं निश्चित्य सिद्धांतास्-, तत्प्रयोगांस्तथोत्तमान् ,
सुव्यवस्था समाजस्य कार्याऽऽर्यैः सुदृढा पुनः ।

---

समाजव्यवस्था चतुर्व्यूहा ।

"संघातवान् मर्त्यलोकः परस्परमुपाश्रितः" ; (म०भा०शां०२९८)
संघो यत्र बलं तत्र, निस्संघत्वे कुतो बलं ?
"बुद्धिर्यस्य बलं तस्य, निर्बुद्धेस्तु कुतो बलं ?"
यत्र बुद्धिः तत्र संघः, निर्बुद्धीनां न संघता ;
जन्मनैवोच्चनीचत्वे न संघो, न बलं, न धीः ;
समाजव्यूहनं पूर्वैः कृतोऽतो गुणकर्मभिः ।
चत्वारो ऽवान्तरव्यूहाः, समाजे सुव्यवस्थिते ,
वर्णाश्रमात्मकाः, सर्वे सर्वदा संति संहताः—
(१) शिक्षाव्यूहः, तथा (२) रक्षाव्यूहः, (३) तत्र तृतीयकः
वार्त्ताव्यूहः, (४) चतुर्थस्तु सेवाव्यूहो, ऽत्र सम्मतः ।
(१) तत्र 'शिक्षक'-वर्णश्च, 'ब्राह्म-णं' यं वदंति हि ,
विद्यार्थिनां समूहश्च 'ब्रह्म-चर्या' ऽश्रमस्तु यः ,
मिलित्वा साध्नुतो हि-एतौ प्रथमं, सर्वसाधकं ,
'शिक्षाव्यूहं' तु, योऽन्येषां त्रयाणां बुद्धिदायकः ;
'ब्रह्म' शुक्रं च, वेदाश्च, परमात्मा तथैव च—
तपस्यया त्रयं सिद्धं यस्य स 'ब्राह्मणो' भवेत् ;
'ब्रह्मचारी' तु, यश्चर्या, त्रयं साधयितुं, चरेत् ।
"यः कश्चिदेवाऽपरोक्षीकृत्य-आत्मानं तु, वर्त्तते
कृतार्थत्वेन, स ह्येव ब्राह्मणो, नाऽत्र संशयः" ।
( वज्रसूच्युपनिषत् )

सच्छिक्षया तु सञ्ज्ञाने समाजे सुप्रवर्त्तिते ,
सच्छिक्षकैः, सर्वमन्यत् सम्पन्नं भवति ध्रुवं ;
ज्ञानं, शौर्यं च; भोज्यं च, परस्परसहायनम् ,
शिष्टता, सभ्यता, शांतिः, तुष्टिः, पुष्टिश्च सर्वथा ,
सर्वांगेषु समाजस्य सौमनस्यं च सिध्यति ।

"रुचं नो धेहि ब्राह्मणेषु, रुचं राजसु नः कृधि,
रुचं विश्येषु शूद्रेषु, मयि धेहि रुचा रुचं"; (य०वे०)
सर्वेषु रुचं आधातुं शक्तः, सच्छिक्षको हि यः,
गुणकर्मविवेकेन क्षमः शिष्यपरीक्षणे।
'वर्चस्वी ब्राह्मणोऽस्माकं तपोविद्यायुतो भवेत्,
तेजस्वी क्षत्रियश्चापि, महस्वी वैश्य एव च,
रंहस्वी च तरस्वी चाऽप्यास्माकं अनु-जो भवेत्,
स्वकर्म-धर्म-निष्ठाश्च सर्वेऽन्योऽन्यमनुव्रताः'—
इत्याशिषां तु सम्पत्तिः आयत्ता शिक्षकेषु वै।
सच्छिक्षकास्ते एवात्र तपोविद्यायुतास्तु ये,
वीतरागभयक्रोधाः, सर्वलोकहिते रताः।
"यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा,
तस्यापि तत्क्षुधा राष्ट्रं अचिरेणैव सीदति"; (म०)
सत्-'श्रोत्रियः' स एवास्ति यो भवेत् सु-बहु-'श्रुतः',
सम्पन्नः साऽर्थया 'श्रुत्या', ना"ऽनुवाकहतः" पुनः,
विनीतश्च, दयालुश्च, सच्छास्त्राणां च शिक्षकः,
'शुश्रूषव'श्च 'श्रोतारो' यस्य श्रद्धालवो बहु;
सार्थं वेदं तु यो वेद, स हि 'सच्छ्रोत्रियः' स्मृतः;
अन्यथा श्रोत्रियाऽभासो ऽनुवाकहतबुद्धिकः;
युधिष्ठराववोधाय प्राह कुन्ती यथा पुरा—
"मन्दकस्येव ते, राजन्, श्रोत्रियस्याऽविपश्चितः,
अनुवाकहताबुद्धिर् एकं धर्ममवेक्षते", (म०भा०)
नाऽवेक्षतेऽपरान् धर्मान् अधिकं समयोचितान्,
अनभिज्ञा तदर्थानां, केवलं शब्दपाठिनी,
ईक्षमाणा-एकपक्षं तु, पश्यन्ती नाऽपरानपि;
न तु सच्छ्रोत्रियस्येव, सार्थान् वेदान् विजानतः

सांगोपांगान् सरहस्यान्, ऊहाऽपोहक्षमस्य च ;
"स्थाणुरयं भारहारः किलाऽभूद् अधीत्य वेदं न विजानाति योऽर्थं ;
अर्थज्ञः इत् सकलं भद्रं अश्नुते, नाकं एति ज्ञानविधूतपाप्मा";(निरुक्त०)
"योगः, तपो, दमो, दानं, सत्यं, शौचं, दया, श्रुतं,
विद्या, विज्ञानं, आस्तिक्यं—एतद् ब्राह्मणलक्षणं"।(वसिष्ठस्मृ०)
(२) 'रक्षकाणां' च वर्णेन, 'क्षत्रियो' यस्तु कथ्यते,
गार्हस्थ्याद् विनिवृत्तानां 'वानप्रस्था'ऽश्रमेण च,
योगक्षेमविधाताऽयं 'रक्षा-व्यूहो' विधीयते।
दुर्बलान्त्रायते यस्तु क्षताद् अनुचिताद् अपि,
"स एव क्षत्रियः प्रोक्तः क्षतत्राणं करोति यः" ;(म०भा०)
समाप्य गृहधर्मान् ये 'वनखंडं' तु 'प्रस्थिताः',
'वानं' तरूणां षंडो हि 'प्रस्थो' वासस्थलं भवेद्
येषां तु लोकसेवार्थं, निर्द्वंद्वमनसा तथा
रागद्वेषविमुक्तेन, 'वानप्रस्थाः' तु ते मताः ;
( इन्द्रप्रस्थ-राजप्रस्थ-वत् शब्दोऽयं विनिर्मितः ) ;
वनखंडः, तरुषंडः, वानं, च-उपवनं समाः।
वनस्थाः ननु, गार्हस्थ्ये व्यवहारेषु दीक्षिताः
विविधेषु, ततो जाताः कुशलाः दूरदर्शिनः
बहुकार्याऽनुभविनः, निस्स्वार्थाश्चाऽधुना हि ते,
'रक्षकान्' सर्वकार्येषु परामर्शयितुं क्षमाः,
नियंत्रयितुं एवापि, गुरु स्यात् चेत् प्रयोजनं,
तद्द्वारा सर्ववर्णांश्च कृत्यान् कारयितुं स्वकान् ;
वनस्थाः ऋषयः यद्वत् निरैक्षन्त पुरा नृपान्।
"स्वाध्याये नित्ययुक्तो यः, दान्तो, मैत्रः, समाहितः,
दाता नित्यं, अनाऽदाता, सर्वभूताऽनुकम्पकः", (म०)
कर्त्ता विविधयज्ञानां वानप्रस्थस्तु कथ्यते।

सर्वं विश्वजनीनं हि कर्म 'यज्ञः', परार्थकृत् ;
न पशूनां विशसनं, नाऽग्नौ बहुघृताऽर्पणं।
"द्रव्ययज्ञाः, तपोयज्ञाः, योगयज्ञाः तथाऽपरे,
स्वाध्यायज्ञानयज्ञाश्च, यतयः संशितव्रताः ;
एवं बहुविधाः यज्ञाः वितताः ब्रह्मणो (वेदस्य) मुखे ;
श्रेयान् द्रव्यमयाद् यज्ञाज् ज्ञानयज्ञः परंतप" ; (गी०)
"आरंभयज्ञाः क्षत्राश्च, हविर्यज्ञाः विशः स्मृताः,
परिचारयज्ञाः शूद्राश्च, जपयज्ञाः द्विजातयः ;
ब्राह्मणाः ज्ञानयज्ञाश्च, रक्षायज्ञाश्च क्षत्रियाः,
वार्त्तायज्ञास्तथा वैश्याः, सेवायज्ञाश्च पादजाः" ;(म०भा०)
विप्रस्याऽध्यापनं यज्ञो, रक्षणं क्षत्रियस्य च,
द्रव्याऽन्नदानं वैश्यस्य, शूद्रस्याऽन्यसहायता ;
'यज्ञ'-बुद्ध्या, त्यागबुद्ध्या, 'यज्ञः' एवाऽखिलं कृतं।
"यामिमां पुष्पितां वाचं प्रवदंति-अविपश्चितः,
वेदवादरताः" भूयो, "नाऽन्यदस्तीति वादिनः", (गी०)
तथाऽपहियते चेतो भोगैश्वर्यप्रसंगिनां ;
"यावानर्थः उदपाने सर्वतः संप्लुतोदके,
तावान् सवषु वेदेषु ब्राह्मणस्य विजानतः" ; (गी०)
"प्रायेण वेद तदिदं न महाजनोऽपि,
देव्या विमोहितमतिर्बत माययाऽलं,
त्रय्यां, जडीकृतमतिर्, मधुपुष्पितायां,
वैतानिके महति कर्मणि युज्यमानः"। (भा०स्कं०६अ०३)
"फलश्रुतिरियं नृणां; न श्रेयो; रोचनं परं,
श्रेयोविवक्षया प्रोक्तं; यथा भैषज्यरोचनं ;
एवं व्यवसितं केचिद् अविज्ञाय, कुबुद्धयः,
फलश्रुतिं कुसुमितां, न वेदज्ञाः, वदन्ति हि ;

कामिनः कृपणाः लुब्धाः पुष्पेषु फलबुद्धयः,
अग्निमुग्धाः, धूमतांताः, स्वं लोकं न विदन्ति ते ;
न ते माम्, अंग, जानन्ति हृदिस्थं ये, 'इदं' यतः ,
उक्थशस्त्राः, ह्यसुतृपो, यथा नीहारचक्षुषः ,
ते मे मतं अविज्ञाय परोक्षं, विषयात्मकाः ,
हिंसाविहाराः ह्यालब्धैः पशुभिः, स्वसुखेच्छया ,
यजन्ते देवताः यज्ञैः प्रेत-भूत-पतीन् खलाः ;
'इष्ट्वेह देवताः यज्ञैः, गत्वा रंस्यामहे दिवि ,
तस्यांते इह भूयास्म महाशालाः महाकुलाः'—
एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणां ,
मानिनां चातिस्तब्धानां 'मद्'-वार्त्ताऽपि न रोचते ;
वेदाः ब्रह्मात्मविषयाः, त्रिकांडविषयाः इमे ;
परोक्षवादाः ऋषयः, परोक्षं 'मम' च प्रियं ;
किं विधत्ते, किं आचष्टे, किं अनूद्य विकल्प्यते ?—
इत्यस्याः (श्रुतेः) हृदयं लोके नाऽन्यो 'मद्' वेद कश्चन ;
'मां' विधत्ते, ऽभिधत्ते 'मां', विकल्प्याऽपोह्यते तु-'अहं'—
एतावान् सर्ववेदार्थः, शब्दः आस्थाय 'मां', भिदां
मायामात्रं अनूद्य,-अन्ते प्रतिषिध्य, प्रसीदति ।(भा०स्कं०११अ०२२)
"प्लवाः हि-एते अदृढ़ाः यज्ञरूपाः, अष्टादश-उक्तं अवरं येषु कर्म ;
एतच् छ्रेयो येऽभिनंदन्ति मूढाः, जरामृत्युं ते पुनरेवापि यंति ;
अविद्यायामंतरे वर्त्तमानाः, स्वयंधीराः, पंडितम्मन्यमानाः ,
जंघन्यमानाः, परियन्त मूढाः, अन्धेनैव नीयमाना यथान्धाः ;
अविद्यायां बहुधा वर्त्तमानाः, वयं कृतार्थाः, इत्यभिमन्यंति बालाः ;
यत् कर्मिणो न प्रवेदयंति, रागात्, तेनाऽतुराः क्षीणलोकाश्च्यवंते ;
इष्टाऽपूर्त्तं मन्यमाना वरिष्ठं, नाऽन्यच्छ्रेयो वेदयंते प्रमूढाः ,
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इमं लोकं हीनतरं वा विशंति ;

तपःश्रद्धे ये ह्युपवसंति-अरण्ये, शांताः विद्वांसः ऋषिचर्यां चरंतः,
सूर्यद्वारेण ते विरजाः प्रयांति यत्राऽमृतः स पुरुषोऽव्ययात्मा ।

(३) 'पोषकाणां' च वर्णन, यो 'वैश्य' इति कथ्यते,
कुटुम्बानां तु भर्तॄणां 'गृहिणां' आश्रमेण च,
सम्पाद्यते शुभो 'वार्त्ताव्यूहो' लोकस्य धारकः,
अन्नदो वस्त्रदो प्राणपुष्टिदः सर्वदेहिनां,
कृषि-गोरक्ष-वाणिज्य-कला-शिल्पादि-वर्धनः ।
"वार्त्तामूलो ह्ययं लोकः, तया वै धार्यते जगत्,
कृषि-गोरक्ष-वाणिज्यं लोकानां इह जीवनं"; (म० भा० शां०)
"शब्दाऽत्मिका सुविमलर्ग्यजुषां निधानं
उद्गीथरम्यपदपाठवतां च साम्नां,
देवी त्रयी भगवती, भवभावनाय
'वार्त्ता' च सर्वजगतां परमार्त्तिहंत्री" । (दु० स०)
"यथा नदी नदाः सर्वे समुद्रे यांति संस्थितिं,
तथैवाश्रमिणः सर्वे गृहस्थे यांति संस्थितिं ;
यथा वायुं समाश्रित्य वर्त्तंते सर्वजन्तवः;
तथा गृहस्थमाश्रित्य वर्त्तंते सर्व आश्रमाः ;
यस्मात् त्रयोऽन्याश्रमिणः, ज्ञानेनाऽन्नेन चाऽन्वहं,
गृहस्थेनैव धार्यन्ते, तस्माज्ज्येष्ठाश्रमो गृही ;
सर्वेषामपि चैतेषां, वेदश्रुतिविधानतः,
गृहस्थः उच्यते श्रेष्ठः, स त्रीन् एतान् बिभर्त्ति हि ;
स संधार्यः प्रयत्नेन 'स्वर्गमक्षय'मिच्छता,
'सुखं' चेहेच्छता 'नित्यं', योऽधार्यो दुर्बलेन्द्रियैः ;
ऋषयः, पितरो, देवाः, भूतानि, अतिथयस्तथा,
आशासते गृहस्थेभ्यः, तेभ्यः कार्यं विजानता" (म०)

(४) 'सहायकानां' वर्णऽन, 'शूद्रं' व्यपदिशन्ति यं,

'सन्यासा'ऽश्रमतश्चापि, 'सेवाव्यूहो' विधीयते।
'शारीरेण' बलेन एते सहाऽयन्ते तु 'सेवकाः',
स्वं च, त्रीन् अपरांश्चापि; सर्वभारसहाः हि ते ;
समाजं 'आत्म'-बलतः सेवन्ते यतयः पुनः,
सत्यमेव भवेयुस्ते 'यमिनो' 'यतयो' यदि,
"अहिंसा, सत्यं, अस्तेयं ब्रह्मचर्याऽपरिग्रहौ"—
एते तु मनुना प्रोक्ताः, तथाऽन्यैश्च महर्षिभिः,
सन्न्यासिनां मुमुक्षूणां योगिनां च 'यमाः' सदा ;
"तपः-संतोष-शौचानि, स्वाध्यायश्च निरंतरं,
ईश्वरप्रणिधानं च", 'नियमाः' इति कीर्त्तिताः। (यो०सू०)
आशीर्वादस्वरूपास्ते, शुभाऽनुध्यानतत्पराः,
करुणामूर्त्तयः सर्वे, सर्वभूतहिते रताः,
समाजमनुगृह्णंति शुभध्यानबलेन वै ;
शांतिं च सौमनस्यं च, मुनयः, प्रशमायनाः,
विस्तारयंति सर्वत्र, स्व'प्रसाद'प्रभावतः ;
"मैत्री-दया-मुद्-उपेक्षा-भावनानां बलेन तु
सुखि-दुःखि-शिष्ट-दुष्टेषु, भवेच् चित्त-'प्रसादनं'"। (यो०सू०)
न मंडलीशाः, नैवापि बहुसम्पत्तिधारिणः,
संसारव्यवहारेषु विनिमग्नाः दिवानिशं,
मिथ्यावेशाः, जंजपूकाः, मिथ्यावेदान्तजल्पकाः,
सर्वैं'र्यमै' र्विहीनाश्च 'नियमै'श्चापि सर्वथा,
कुर्वंतः कपटाचाराः सदा "स्त्रीशूद्रदम्भनं"; (म०)
न सम्प्रदायाऽचार्याः वा मुक्तामणिविभूषिताः,
न वा 'जगद्गुरु'म्मन्याः, 'प्रतिवादिभयंकराः',
'सर्वतंत्रस्वतन्त्राः' वा, 'सर्वविद्यार्णवाः' न च,
न 'शास्त्रसार्वभौमा' वा; किंतु सर्वाऽभयंकराः,

शमंकराश्च सर्वत्र, शं-कराः, शरणंकराः,
अपि निष्किंचनाः, शांताः, रागद्वेषविवर्जिताः,
न्यस्तसंसारकार्याश्च, सर्वत्र समदर्शिनः,
मैत्राश्च करुणाश्चापि सर्वेषां हितचिंतकाः।

---

एवं चतुर्भिर्व्यूहैश्चेत् समाजः सुव्यवस्थितः,
सर्वस्मिन् मानवे लोके सर्वत्र पृथिवीतले,
मर्यादितश्च सद्धर्मैः वर्णाश्रमनिबन्धनैः,
( न त्वेव 'जन्मना' किंतु ) स्वभावगुणकर्मजैः,
प्रविभक्तैश्च कर्त्तव्यैः अधिकारैस्तथैव च,
परिश्रमैश्च तन्मूल्यैः—दुःखं अल्पतरं भवेत्,
यावच्छक्यं मनुष्याणां, सर्वोऽपि सुखमाप्नुयात्,
शांतिश्च भूयात् सर्वत्र, सौमनस्यं च सर्वदा।
"नाऽब्रह्म क्षत्रं ऋध्नोति, नाऽक्षत्रं ब्रह्मवर्धते", (म०)
नाऽवैश्यं उभयं जीवेत्, नाऽशूद्रं त्रितयं चलेत्;
"ब्रह्मणा विहिताः वर्णाः लोकतंत्रं अभीप्सता;
यदि-इदं एकवर्णं स्याज् जगत्, सर्वं विनश्यति;
यदि ते ब्राह्मणाः न स्युः ज्ञान-योग-वहाः सदा,
उभयोर्लोकयोः, देवि, स्थितिर्न स्यात् समास(ज)तः;
यदि निःक्षत्रियो लोको, जगत्स्याद् अधरोत्तरं,
रक्षणात् क्षत्रियैरेव जगद् भवति शाश्वतं;
तथैव, देवि, वैश्याश्च लोकयात्राहिताः स्मृताः,
अन्ये तानुपजीवंति प्रत्यक्षफलदाः हि ते,
यदि न स्युस्तु ते वैश्याः न भवेयुस्तथाऽपरे;
तथैव शूद्राः विहिताः सर्वधर्मप्रसाधकाः;

शूद्राश्च यदि ते न स्युः कर्मकर्त्ता न विद्यते ,
त्रयः पूर्वे शूद्रमूलाः, सर्वकर्मकरास्तु ते" । (म० भा० अनु० २०८)

---

आशास्तयः

चतुर्ष्वंङ्गेषु सम्पुष्टः समाजोऽयं भवेदिह ,
सदासर्वांगसम्पन्नः, नाऽपन्नस्तु कुतश्चन ;
वर्धन्तां 'ज्ञानिनो'ऽस्माकं, धीराः वीराश्च 'रक्षिणः' ,
पोषकाश्चाभिवर्धन्तां, प्रीताः संसाधकास्तथा ;
दातारो नोऽभिवर्धन्तां, मा च याचिष्म कंचन ;
व्यूहाः सर्वेऽभिवर्धन्तां चत्वारः सज्जिताः सदा ,
अन्योऽन्यं अनुरक्ताश्च, परस्परं अनुव्रताः ,
यथैकदेहस्याङ्गानि सुपुष्टानि सुचर्यया ;
'सत्य'मेव युगं चास्तु 'कृत'मेव हि भारते ,
तथाऽखिले मनोर्वंशो 'दशांगैः' सर्वतः स्पृते ;
"रुचं नो धेहि ब्राह्मणेषु, रुचं क्षत्रेषु नः कृधि ,
रुचं विश्येषु, शूद्रेषु, धेह्यस्मासु रुचारुचं" ।

ॐ

---

ॐ

शंकासमाधानं

शंकाः काश्चिन् समाधातुं प्रश्नान् उत्तर्तुमेव च,
अध्यात्मशास्त्रसिद्धांतैः, अतोऽग्रे प्रयतिष्यते।
चिकित्सायाः उपायोऽत्र प्रोक्तो यदि न रोचते,
अवश्यं चिंतनीयोऽन्यो; 'हिन्दु'-नाशोऽन्यथा ध्रुवः।
ये नाम 'हिन्दु'-नामानः भारते संति साम्प्रतं,
न जातु वंशः सर्वोऽपि कदाऽप्येषां विनंक्ष्यति;
किंतु संस्करणाऽभावे 'हिन्दु'-धर्मो नशिष्यति,
भारतीयाः जनाः सर्वे, क्रमशो, ह्यधिकाऽधिकं,
धर्मान् अन्यान् ग्रहीष्यन्ति, निर्विण्णाः 'हिन्दु-धर्मतः',
सवर्णवंगेषु विभ्रष्टान्, मूढ़ग्राहैश्च जर्जरान्।
(१) प्र० एवं भूतेऽपि का हानिः? जीविष्यन्त्येव मानवाः।
उ० सत्यं; किंतु समाजस्य मानवानां, समंततः,
वर्णाश्रमैर्व्यवस्थायाः रीतेर्नाशं विलोप्स्यते;
जीवंति पशवः, किंतु न तन्मानवजीवनं,
धर्मेण संस्कृतैरर्थैः, कामैश्चार्थपरिष्कृतैः,
मोक्षेण परमार्थेन त्रिभिश्चापि नियंत्रितैः;
समजस्य समाजस्य पशु-मानवयोर्भिदा।
(२) प्र० ब्रह्म-क्षत्र-विशः शूद्रश्चेति शब्दचतुष्टयं,
कथं नु जन्मवर्णार्थे चिराऽभ्यस्तं प्रहास्यति?
उ० बह्वर्थगर्भाः सन्तोऽपि, स्वधर्मद्योतकाः अपि,
उदाराश्च, गभीराश्च, बहुभिः सत्कृताः अपि,
कालप्रभावात् सज्ज्ञानसद्भावानां विलोपनाद्,

भ्रष्टाः स्वस्वोचितार्थेभ्यः शब्दास्ते 'ब्राह्मणा'द्यः,
जन्म-प्रत्यय-संसक्ताः, विरक्ताः धर्मकर्मसु,
चत्वारोऽप्यद्य संजाताः केवलं 'जाति'-वाचकाः,
न 'वर्णान्' बोधयंत्यद्य, न वा 'धर्मांस्' तद्-आहितान्।
ब्रह्म-'आत्मा'; ब्रह्म 'वेद'श्च; ब्रह्म 'शुक्रं' तथैव च;
त्रयं च संचितं येन स 'ब्राह्मण' इति स्मृतः;
"सतश्च सततं रक्षेद्, असतश्च निवारयेत्", (म०भा०)
क्षतात् कृशांश्च त्रायेत, स 'क्षत्रिय' इति स्मृतः;
कर्षणैः सिंचनैश्चापि, शालानां रचनैरपि,
शालीनां रोपणैश्चापि, पृथिव्यां 'विशती'ह यः,
सर्वलोकोपकाराय 'विशो' यस्मिन् 'विशन्ति' च,
'परिवेशयिता' (भोजयिता) ऽन्येषां वस्त्र'वेशा'दिसाधकः,
शालीनः शालते शीलैः, स हि 'वैश्य' इति स्मृतः।
'विशः' प्रजाः, 'विशो'ऽन्नानि, धनानि च 'विशः' स्मृताः;
'विशः त्वा सर्वाः वांछंतु, मा त्वद्राष्ट्रं अधिभ्रशत्";
(य० वे० अ० १२)
"विशि प्रतिष्ठितो राजा"—श्रुतिष्वेवं तु पठ्यते।
(य० वे०; अ० वे० २०)
त्रयोऽप्येते 'द्विजाः' ज्ञाताः, कृताऽत्मकृतवुद्धयः;
चतुर्थः 'एक-जातो' यो, नाऽत्मदर्शी च बालवत्,
ज्येष्ठानां किंकरश्चापि, 'द्रवति-आशु' तदाऽज्ञया,
कर्तुं तेषां सहायं यः, स हि 'शूद्र' इति स्मृतः;
"अवश्यं भरणीयो हि वर्णानां शूद्र उच्यते"; (म० भा० शां०)
एवं महार्थाः शब्दास्ते सर्वेऽपि भ्रष्टतां गताः,
यथोत्तमानि वासांसि जीर्णानि बहुकालतः,
दुष्प्रयोगेण चाऽस्थाने, भवंति, मलिनान्यपि;

न वृत्तीर्, न च कृत्यानि, न धर्मान् 'वर्णयन्ति' ते।
सर्वेषामपि कर्माणि सर्वे कुर्वंति साम्प्रतम्—
अध्यापनं, शस्त्रकार्यं, कृषिवार्त्तं, च सेवनम्;
"सर्वे सर्वास्वपत्यानि वर्णाः संजनयन्ति हि;
कृतकृत्याः सर्ववर्णाः यदि वृत्तं न पश्यति"; (म० भा०)
—इत्येवं अवदत् सर्परूपिणं नहुषं नृपं,
युधिष्ठिरो धर्मराजः, यथा वै भारते कथा।
अन्याऽपि दृश्यते देशे चिराद् एवाऽनवस्थितिः—
सर्व'जाति'षु सर्वेऽपि 'वर्णाः' प्रत्यक्षतः स्थिताः;
सन्त्येव भारते नूनं सर्व'जाति'षु 'पंडिताः',
'महाराज'पद्भाश्च 'भूमिपाः' सर्व'जाति'षु,
'धनसंग्राहका'श्चापि, चतसृष्वपि 'सेवकाः'।
'वृत्ति-संकर'रूपोऽयं सर्वथा 'वर्ण-संकरः'।
विवेकार्थं अतो धर्म-कर्मादीनां स्वभावतः,
चत्वारो हि नवाः शब्दाः, धर्म-कर्मा-ऽवबोधकाः,
जीविकाद्योतकाः, वृत्तिविभागस्यापि साधकाः,
अर्थगर्भाः, समाजस्य व्यवस्थार्थं अपेक्षिताः।
शिक्षकाः, रक्षकाश्चैव, पोषकाः, धारकाः अपि;
ज्ञानदाः, त्राणदाश्चापि, प्राणदाश्च, सहायदाः;
बोधिनः, शुष्मिणश्चापि, दानिनः, श्रमिणस्तथा
शास्त्रिणः, शस्त्रिणश्चापि, धनिनः, धारिणोऽपि च;
वर्चस्विनश्च, तेजस्वि-महस्वन्तौ, तरस्विनः,
तपस्, सहस्, तथैवोजो, रंहो, येषां भवेत् क्रमात्;
विद्वांसश्चैव, वीराश्च, वदान्याश्चापि, सेवकाः;
शर्मिणो, वर्मिणश्चापि, घर्मिणो (दुग्धवंतः) भर्मिणस्तथा;
प्राज्ञाः, शूराश्च, दक्षाश्च, द्रुतिमंतस्तथैव च;

विद्योपजीविनश्चैके, ऽपरे रक्षोपजीविनः,
वार्त्तोपजीविनश्चान्ये, चतुर्थाः भृतिजीविनः—
एवं प्रसन्नगम्भीराः, स्वस्वधर्मोऽववोधकाः,
कृत्यसारयितारश्च, नीचोच्चध्यानवर्जिताः,
चतुःशब्दचयाः, उक्ताः, अन्ये वा तादृशाः अपि,
व्यवह्रियंतां एतर्हि, संशयस्याऽभवाय वै।
चतुर्णामन्यनामानि 'द्वीपे''द्वीपे', 'युगे' 'युगे',
पुराणेष्वितिहासेषु संत्येव-उक्तानि भूरिशः।
यथा कौर्मे तु, याः प्लक्षे, शाल्मलौ च, कुशे क्रमात्,
क्रौंचे, शाके, तथा श्वेते, वर्णाख्याः संभवंति हि—
"आर्यकाः, कुरराश्चैव, विदेहाः, भाविनस्तथा,
ब्रह्म-क्षत्रिय-विट्-शूद्राः प्लक्षद्वीपे प्रकीर्त्तिताः;
कपिलाः, अरुणाः, पीताः, कृष्णाः, द्वीपे तु शाल्मलौ;
द्रविणाः, शुष्मिणः, स्तोभाः, मंदेहाः च, तथा कुशे;
पुष्कलाः, पुष्कराः, धन्याः, तिष्याः, क्रौंचे, क्रमेण वै;
मृगाश्च, मगधाः, शाके, मानसाः, मंदगाः तथा;
श्वेते अवर्णाः श्वेतवर्णाः प्रायस्त्रिगुणवर्जिताः"। (कूर्मपु०अ०४९)
एवं 'द्वीपेषु' सर्वेषु क्ष्मायाः वर्णाः व्यवस्थिताः।
सर्वदेशेष्विदानीं च, प्रायः सर्वनृजातिषु,
चत्वारो मुख्यतो हि-इमे, उक्ताः चाऽपरनामभिः,
समाजकायव्यूहार्थं, न स्पर्धार्थं परस्परं,
यथा प्राचीन-'वर्षेषु'-अर्वाचीनेष्वपि वै तथा।
पश्चिमेषु-आंग्लभाषायां तेषां संज्ञाः प्रकीर्त्तिताः—
'प्रीस्ट-सोल्ज़र-मर्चेण्ट-वर्कमान'-इति नामभिः;
'क्लर्जी-नोवल्स-कामन्स्' च, 'लेवर्' इत्यपि वै तथा;
पार्स-मिस्र-अर्ब-देशेषु, मुहम्मद्-अनुयायिषु,

'आलिम्','आमिल्', तथा 'ताजिर्', 'मज़दूर्'-इति च शब्दिताः ;
पारसीकेषु 'ज़र्दुश्त'मुनिधर्मावलम्बिषु ,
'अथर्वन्-अरथस्तार-वस्त्र्य-ह्वविश्' इतीरिताः ;
जापाने 'निपुण' द्वीपे, 'शिंतो'-धर्मावलंम्बिनि ,
'शोगुन्-समूरा-हैमिन्'श्चापि, 'एता'-इत्यादि च वर्णिताः ।
न तु पाश्चात्यदेशेषु कृतं वृत्तिविभाजनं ,
विस्पष्टं बुद्धिपूर्वं च; ततस्तत्राऽनवस्थितिः ,
क्षोभः, स्पर्धा च, संघर्षः, 'वर्णानां' तु परस्परं ।
एतत्सर्वं समालोच्य, समीक्ष्य च, परीक्ष्य च ,
नूतनैर्नामभिः सार्धं कार्यं वृत्तिविभाजनं ;
धारयन् 'वर्ण'-नाम-एकं, वृत्तिं एकां च धारयेत् ;
सहाऽहारविवाहादि, शीलसाम्येन चाऽचरेत् ।
एवं कृते समग्राणां मानवानां तु संग्रहः
सम्भवेन् मानवे धर्मे; यतो व्यापि चतुष्टयं ।
शैव-वैष्णव-शाक्तेषु, तादृगन्येषु 'हिन्दुषु'
सूर्याद्युपासकेष्वेवं, चत्वारः संति ते यथा ,
बौद्धाः, जैनाः, यहूदाश्च, मुस्लिमाः, क्रिस्चना, स्तथा ,
सिक्खा, श्चाऽपरधर्माणः विभाज्याः स्युः चतुर्ष्विति ।
यथा पंजाबिनो, वाङ्गाः, युक्तप्रान्तीयकाः, तथा
मद्रासिनो, महाराष्ट्राः, आन्ध्राः, मार्वारिणः अपि च ,
भाषमाणाश्च विविधाः भाषाः, विविधधर्मिणः ,
विभिन्नाः बहुधाऽऽचारैः, वेषभूषादिभिः तथा ,
अन्यप्रान्तोद्भवाश्चापि, तथा सर्वेऽन्य-'हिन्दिनः' ,
( 'हिन्द'देशोद्भवो 'हिन्दी', 'पंजाबी'-इत्यादिवद् भवेत् ) ,
चतुर्वृत्तिविभक्ताः, स्युः चतुर्वर्णेषु संगताः—
तथैव च कथं न स्युः बर्मि-जापानि-चीनिनः ,

ईरानिनः, तुर्किणश्च, रूसिनो, ऽफ़ग़ानिनस्तथा,
जर्मनाः, ब्रिटनाश्चापि, फ्रेंचाः, स्पेननिवासिनः,
अमेरिकानाश्चान्ये च सर्वे मानवजातिजाः ?
राशीकृताः चतुर्ष्वेव "पृथिव्यां सर्वमानवाः"
मनुना, स्पष्टमादिष्टं चापि "नास्ति तु पंचमः"। (म०)
चातुर्वर्ण्यव्यवस्थेयं 'संचिका'-(सांचा)-इव विनिर्मिता ;
मानवानां समूहोऽस्यां यः 'पूर्यंता' ऽपि कश्चन,
स एव लभते रूपं संचिकायाश्चतुर्दलं ;
स्वर्णकारस्य हस्तेन, वह्निना च द्रवीकृतं,
संचिकायां यथा हेम क्षिप्तं, तद्रूपभाग्भवेत् ;
केदाराणां यथाऽऽकारं प्लावितं सलिलं धरेत्।
पुराणेष्वितिहासेषु, शतशो 'जातयः' स्मृताः,
मत्स्याश्च, मगधाश्चापि, चेदयः, काशिकोशलाः,
वाह्लीकाश्चापि, गांधाराः, सौराष्ट्रा,श्चाथ सैन्धवाः,
कुरवों,ऽगाश्च, वंगाश्च, चोलाः, पांड्यास्तथैव च ;
चातुर्वर्ण्यं तु सर्वासु 'जातिषु'-एतासु-अभूत् सदा।
अर्थोऽन्यो 'जाति'शब्दस्य, 'वर्ण'शब्दस्य चान्यथा ;
अर्थयोः संकरादेव संजातोऽयं महाभ्रमः,
यज् 'जन्मनैव', 'जात्यैव', 'वर्णो' भवति वै नृणां।
'जन्मना जातिर्' एवास्ति; 'वर्णो' भवति 'कर्मणा'।
जीविकाकर्मणा वर्णः, तद्-वृत्तेरवबोधकः,
दृश्यते चाऽन्यदेशेषु; भारतेऽपि पुरा तथा।
(३) प्र० भूयः उत्थाप्यते प्रश्नः—इयं रीतिस्तु भूतले,
विहाय भारतं वर्षं सर्वत्र प्रसृताऽधुना ;
को विशेषो भवेद् एवं अस्माकं 'वर्ण'धर्मिणां ?
उ० उत्तरं तत्र चैवं स्यात्—जीविकानां 'विभाजनं'

वृत्तीनां, तोषणानां च, धर्माणां, कर्मणां तथा,
कृत्यानां, अधिकाराणां, श्रमस्या,ऽर्घस्य चैव हि,
निकामीयादिवस्तूनां अपि तद्वद् 'विभाजनं',
पूर्वं चतुष्कैरुक्तानां, गुणभेदाऽनुसारतः—
अयमेव विशेषोऽस्ति 'कर्म-वर्ण'-व्यवस्थितेः।
"चातुर्वर्ण्यं यतः सृष्टं गुण-कर्म 'विभागशः'"; (गी०)
चतुष्कानां 'विभागेन' विना, वर्णचतुष्टये,
न धर्मसम्मतं सम्यक् चातुर्वर्ण्यं तु सिध्यति।
एक एव नरो यत्तु सर्वमेव जिघृक्षति—
'सम्मानं', 'ईशितां' चापि, 'धनं', 'मोदं' च, सर्वथा
सर्वोत्कृष्टत्वमेव—अयं प्रधानो 'वर्ण'-संकरः;
जीविकानां, राधनानां, धर्माणां, कर्मणां तथा,
कृत्यानां, अधिकाराणां, संकरो वर्णसंकरः;
विषमप्रकृतीनां च विवाहोऽप्यस्ति संकरः;
'जाति' नाम्नैव भिन्नानां उद्वाहो नाऽस्ति संकरः।
नैतादृशो विभागस्तु कृतोऽन्यैः बुद्धिपूर्वकं;
तेषां समाजेष्वप्यस्माद् दृश्यंते कलहाः भृशं;
तथाऽपि नाऽस्माकमिव दासास्ते ऽन्यस्य कस्यचित्।
विशिष्टधर्मता लुप्ता नः; विशेषस्तु शिष्यते,
यज् जन्म-वर्णता-मूढाः वयं दासत्वमागताः।
'शाक'हूणादयः पूर्वं येऽत्र-आक्रम्य समागताः,
ते 'शाक'द्वीपिनो विप्राः, क्षत्रियाः वा, बुधैः कृताः,
गुणकर्मानुसारेण कर्मवर्णेषु मेलिताः।
'राजपूतान'-प्रान्ते च चत्वारः क्षत्रजातयः,
'सोलंकी'-'परमारौ' च, 'चौहान'-'पड़िहारकौ',
प्रसिद्धाश्चाद्य वर्त्तंते सर्वेऽपि 'अग्निकुला'ऽख्यया;

आख्यायिकाऽपि चैतेषां जननस्य प्रथीयसी—
विप्राणामग्निकुंडात्ते उत्थिताः यज्ञकर्मणि,
निरोद्धुं प्रतियुद्धेन बाह्यान् आक्रमकारिणः,
यथा 'कृत्याः' ऋषिसृष्टाः पुराणे सन्ति वर्णिताः।
आख्यायिकायाः तु-अर्थोऽस्याः स्पष्टः एव हि लक्ष्यते—
अग्निं प्रज्वाल्य साक्षित्वे, ज्ञानिभिर्दूरदर्शिभिः,
सद्विप्रैः, राजधर्मज्ञैः, भारतस्य हितेच्छुभिः,
विधिवद्वेदमंत्रैश्च धीरवीरविवर्धनैः,
समक्षं जनतायाश्च, शूराः केऽप्यन्यजातितः,
'महाजन'समारोहे, क्षत्रियत्वेन संस्कृताः,
चतसृणां च सेनानां नायकत्वे नियोजिताः;
'व्रात्यस्तोमादि'विधिभिः वेदाऽज्ञप्तैः, यथा पुरा
आर्याः, वर्धिष्णवः, "कर्त्तुं विश्वं आर्यं" प्रयेतिरे।
विद्योपजीविनस्त्वेके, परे रक्षोपजीविनः,
वार्त्तोपजीविनश्चान्ये, ऽपरे प्रैष्योपजीविनः,
सर्वत्रैव हि दृश्यन्ते; नतु जन्माऽग्रहस्तथा,
यथाऽत्र भारते वर्षे, परेषां दासतां गते।
कर्म-वर्णाः जन्म-वर्णान् यथेष्टं द्रावयंति वै,
पार्ष्णि चापि ददति-एभ्यो, हि 'अशक्ते'भ्यस्तु सर्वथा,
परस्परेर्ष्या-मूढेभ्यो, विभिन्नेभ्यः परस्परं।
सर्वपूज्या सर्वमान्या 'शक्ति' रेकैव देवता;
'अशक्तः' क्षिप्यते सर्वैः, ना'ऽविष्णु' श्चापि ना 'ऽशिवः'; (देवीभा०)
"सर्वेषामेव देवानां शक्रादीनां शरीरतः,
निर्गतं सुमहत्तेजस् तच्, च-'ऐक्यं' समगच्छत" (दु० स०)
यदा, तदैवाभूत् पूर्वं महिषासुरसूदनं।
चत्वारि-अपि बलानि-ऐक्यं, शास्त्र-शस्त्र-धन-श्रमाः,

यदा संघे समेष्यंति, तदा स्यात् पापशातनं ;
अयमेव 'चतुर्व्यूहो'ऽवताराणां तु शाश्वतः ।
उपो-प-जाति-भिन्नानां तत् कथं सम्भविष्यति ?
(४) प्र० संशेरतेऽत्र केचित्तु, विना हेतुं, अतित्वराः—
निरर्थो, निष्प्रभावा वा, किन्नु वंशपरम्परा ?
"येनाऽस्य पितरो याताः, येन याताः पितामहाः ,
तेन यायात् सतां मार्गं, तेन गच्छन् न रिष्यते" , (म०)
इति यन्मनुनाऽदिष्टं व्यर्थमेवास्ति किन्नु तत् ?
उ० तत्रैतद्धि समाधानं—नैतद् व्यर्थं कथंचन ;
नूनं आप्तोपदेशोऽयं न केनाऽपि निरस्यते ;
अर्थोऽयं पूर्वमेवोक्तः, 'उत्सर्गः' तादृशो भवेत् ,
प्रायः 'सामान्य'रूपेण, साधारणजनार्थकः ;
किंतु तत्रा'ऽपवादाः' ये, 'विशेषो'न्मेष-कारिताः ,
येषु केषु, यत्र तत्र, नोपेक्ष्यास्तेऽवहेळया ।
प्रकृतेः 'सूचकं' जन्म; कर्म 'निर्णायकं' पुनः ।
पुत्राय चेत् पितुः 'कर्म' स्वभावेनैव रोचते ,
करोतु-अवश्यं तद् अयं; न केनाऽपि निवार्यते ।
उत्तमा जन्म-कर्मभ्यां, कर्मणैव तु मध्यमा ,
मिथ्यैव केवलं जात्या, वर्णवत्ता स्मृता बुधैः ।
नैसर्गिकी प्रवृत्तिश्च, तथा वंशपरम्परा ,
मिलिते चेद् उभे, वृत्त्यै, 'स्वर्णं सौगन्ध्य'मस्ति तत् ।
प्रवृत्तिः प्राकृता यत्र भिन्ना वंशक्रमात्, तदा
प्रवृत्तेरेवाऽनुरूपं जीविका, वर्णं एव च ।
शतशश्च पुराणेषु दृष्टान्ताः वर्ण-पर्यये ।
'उत्सर्गाणां' तु सर्वेषां 'अपवादाः' भवंति वै ।
अवश्यं 'नियमो' मान्यः; मान्यो 'बाधो'ऽपि, हेतुना ;

साधारणासु-अवस्थासु नियमस्य प्रवर्त्तनं ;
विशेषासु-अपवादाः हि प्रभवन्त्येव सर्वदा ।
"अन्यो धर्मः समस्थस्य, विषमस्थस्य चाऽपरः ;
न कोऽप्यात्यंतिको धर्मः; धर्मो ह्यावस्थिकः स्मृतः" ; (म० भा०)
सम्पत्काले यथा-'उत्सर्गाः', 'विपरीता'स्तथाऽऽपदि ,
नियमाः एव नियमान् बाधन्ते; नियमोऽप्यसौ ।
"नहि सर्वहितः कश्चिदाचारः सम्प्रवर्त्तते ;
तस्माद् अन्यः प्रभवति; सोऽपरं बाधते पुनः ;
आचाराणामनैकाग्र्यं तस्मात् सर्वत्र दृश्यते" ; (म० भा०शां०)
निमित्तानि समीक्ष्यापि, देशकालौ-अवेक्ष्य च ,
समाजस्य हिताः धर्माः कल्पनीयाः सदा बुधैः ।
"स्त्रियो रत्नान्यथो विद्याः धर्माः शौचं सुभाषितं ,
विविधानि च शिल्पानि समादेयानि सर्वतः" । (म०)
चिरकालात् कुले यस्मिन् प्रथिता-एका परम्परा ,
परौ-परौ सन्ततौ च वंशे तद्गुणसंभवः ;
किंतु संभव एवास्ति; न कदाचन निश्चयः ;
नियमस्याऽस्य भंगो हि बहुधा दृश्यते यतः ।
महर्षिभ्यः पुरा जाताः सुराः, दैत्याश्च, राक्षसाः ,
ऋषयः, क्षत्रियाश्चापि, विट्-शूद्राः अपि जज्ञिरे ;
कुले विद्याविहीनेऽपि भवंत्येव तु पंडिताः ;
वंशे तथैव शूराणां जायंते भीरवोऽपि वै ;
भीरूणां च कुले वीराः उत्पद्यंते पुनः पुनः ;
विद्याभ्यासि-कुले मूर्खाः जायंते बहुशस्तथा ;
सदाचारि-कुले चापि दुराचाराः भवंति हि ;
कुले व्यापारदक्षाणां, सम्पन्-नाश-कराः अपि ;
दरिद्राणां तथा वंशे, श्रीनिकेताः' यदा कदा ;

प्रेष्याणां किंकराणां च, दक्षाः, वीराश्च, पंडिताः ;
राजवंशकृतश्चापि संति शूद्रेभ्यः उत्थिताः ।
प्रत्यक्षं प्रतिपरुः एतत्सर्वं तु दृश्यते ।
"ऋषीणां च नदीनां च जन्मस्थानं न विद्यते" ,(म०भा०)
—इति पौराणिकी गाथा साक्षादेवानुभूयते ।
"जन्मादि-अस्य यतः", ब्रह्म, सर्वबीजं तु, सर्वदा
सर्वत्र व्यापकं यस्मात्, त्रिगुणं च तथैव हि
संसृष्टं चापि सर्वत्र, तस्मात्सर्वत्र संभवः
सर्वेषामपि वर्णानां, सर्वेषु नृकुलेष्विति ।
वैदिकं शाश्वतं चापि वक्ति एतद् हि-एव रूपकं—
एकस्यैव पितुः वर्णाः चत्वारो 'ब्रह्मणः' सुताः ।
कश्यपस्य ऋषेर्दैत्यो हिरण्यकशिपुः सुतः ,
सर्वेषामेव लोकानां भृशमुद्वेजकोऽसुरः ;
हिरण्यकशिपोश्चापि प्रह्लादः साधुपूजितः ,
पूर्णेन्दुविमला कीर्त्तिर्यस्यास्त्यद्यापि विस्तृता ।
पुलस्त्यस्य ऋषेः पौत्रो रावणो लोकरावणः ;
विभीषणोऽप्यस्य भ्राता; कुबेरश्च धनाधिपः ।
वर्णधर्मस्य योग्यत्वे, व्यभिचारि-एव कारणं
दृश्यते जन्म; नाऽन्वेति; नैव वा व्यतिरिच्यते ;
न हि शूरस्य पुत्रोऽपि सर्वदा शूर एव हि ;
न वार्त्ताकुशलस्यापि सुतः अर्थकुशलः सदा ;
न प्रेष्यस्य सदा पुत्रो विद्याः शिक्षितुमक्षमः ;
न च विद्वत्सुतो विद्वानेव सर्वत्र लभ्यते ।
स्वभावजा प्रवृत्तिर्या सैव योग्यत्व-कारणं ;
अन्वयाद् व्यतिरेकाच्च सर्वदा सहचारि तत् ;
तत्तद्योग्यत्वमेवास्ति तत्तद्वर्णस्य कारणं ;

"प्रत्यक्षाऽवगमं, धर्म्यं, सुसुखं कर्त्तुं, अव्ययं × ,
चातुर्वर्ण्यं मया सृष्टं गुण-कर्म-विभागशः,
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः" ।
जन्मन्यपि तु कर्मैव हेतुः वेदविनिश्चितः ;
न जन्म दृश्यते तद्वत् सद्-असत्-कर्म-कारणं ।
"स्वकर्मणा सर्वसिद्धिं अमरत्वं लभेद् ध्रुवं ,
सुरत्वं च, मनुत्वं च, सुरेन्द्रत्वं लभेन् नरः ,
विष्णुत्वं च, शिवत्वं च, गणेशत्वं तथैव च" ।
( दे० भा० स्कं० ९, अ० १७-१८-२० )

पर्यायशब्दाश्चत्वारः, "क्रतुः, कामो, वशो, ऽपि-असुः",(ऐ०उ०)
"क्रतुमयो हि पुरुषः", "यो यच्छ्रद्धः स एव सः" ,
(छां० उ०; गी०)

"यथाकामो हि पुरुषः, भवेत् तत्क्रतुरेव सः ,
तत्कर्म कुरुते चैष; यच्च कर्म करोत्यसौ
अभिसम्पद्यते चाऽयं तदेव"-इति श्रुतिर्जगौ ; (बृ०उ०)

(५) प्र० केचित् तत्र विशंकन्ते—विवाहादि कथं भवेत् ,
सहाऽऽहारो विहारो वा, वसनं चाऽऽसनं तथा ,
जन्मवर्णव्यवस्था चेत् समग्रा परिवर्त्स्यते ?
उ० उत्तरं सरलं तत्र—शीलव्यसनसाम्यतः ;
अनुकूलं ययोः शीलं, सम्वादि व्यसनं तथा ,
तयोरेव मिथः पाणिग्रहणं तु प्रशस्यते ;
"विशिष्टायाः विशिष्टेन संगमो गुणवान् भवेत्" ;
(म० भा० नलो०)

परीक्षा जन्मपत्राणां ज्यौतिपैर्यत्तु कार्यते
कुलैः सम्बन्धमिच्छद्भिः, इदमेवात्र कारणं ,
निश्चीयेत गुणानां यत् साम्यं हि वरकन्ययोः ,

सहधर्मचरौ स्यातां, मा द्विषातां च दम्पती,
"अन्योऽन्यस्याऽव्यभीचारो भवेद् आ-मरणान्तिकः", (म०)
तदूर्ध्वमपि वा सङ्गो "भवेज्जन्मनि जन्मनि"।
एवं च शीलसाम्येन भोजने सख्यं इष्यते,
सात्त्विकानां, राजसानां, तामसानां तथैव च।
'ज़मीदारो' यदि पिता, पुत्रश्चैकोऽथ 'डाक्तरः',
'प्रोफ़ेसरो' द्वितीयश्च, तृतीयश्च 'वकीलकः',
'दूकान्दारः' चतुर्थश्च, 'रिसाल्दार'श्च पंचमः,
पुत्रिकाः पंचपाश्चापि, भिन्नप्रकृतिकास्तथा,
पत्न्यो ऽपत्यानि पुत्राणां चाऽमीषां हि महाकुले—
किं सर्वेषामथैतेषां, प्रीतिर्यावत् परस्परं,
सहाऽसनं न सम्भाव्यं, अशनं वसनं तथा ?
कलहे खलु सम्प्राप्ते, येन केनापि हेतुना,
विभिद्यन्ते विभज्यंते भ्रातरो ऽपि सहोदराः।
'प्रोफ़ेसरस्य' चाऽन्यस्य भवेदेतादृशं कुलं,
महाशालस्य वा 'सार्थवाहस्य' 'नैगमस्य' वै,
भिन्नप्रकृतिकैश्चापि विभिन्नव्यवसायकैः
अपत्यैर्यदि पूर्णं, तत्, किं तयोर्कुलयोर्मिथः
न सम्भाव्योऽन्नसम्बन्धो, यौनसम्बन्ध एव वा ?
पितु'र्गोत्रं' त्यजत्येव, पत्युर्गृह्णाति चैव हि,
कन्या पाणिग्रहे यद्वत्, 'वर्णं' चापि तथैव हि।
कर्षकस्यापि कन्या वा, पुत्री वार्त्ताकरस्य वा।
सुताऽथवा सैनिकस्य, राज्ञा चेत् परिणीयते,
भवत्येव हि सा राज्ञी; राजजीविकया यतः
जीविष्यति तु सा-इदानीं; न वृत्त्या तु पितुः पुनः।
राजाऽसने स्वयं तिष्ठेद्, अधिकारांश्च वर्त्तयेत्,

'राजा'-एव वाच्यतेऽपि स्त्रीः न तु 'राज्ञी'-इति व्याकृतिः ;
आचार्यस्य तथा पत्नी तु-'आचार्याणी'-इति कथ्यते ;
आचार्यत्वं स्वयं कृत्वा स्त्री-'आचार्या'-इत्येव वर्ण्यते ।
'वर्णं' तु 'जीविकां' मत्वा, तस्य वै पर्ययो भवेत्,
योषितायाः परिणये; त्यक्त्वा गेहं पितुः, यथा
कुटुम्बं, वर्णमपि च, पाणिग्राहस्य सा विशेत् ;
—एवं कृता चेन्मर्यादा, वर्णानां रक्षणं भवेत् :
न भज्येत व्यवस्थैषां, न स्याच्छिन्ना च संघता ।
'वर्णं' तु 'जातिं' मत्वैव, बहिष्कारः क्रियेत चेत्,
उत्पत्स्यंते ऽन्तरालास्तु नित्यमेव नवाः नवाः ;
"कामः स्वभाववामः" सन्, न जात्यादिकमीक्षते ;
पूतिकूष्मांडतां चापि गमिष्यति समाजता :
न 'समाजः' 'समाऽजः' स्यात्, यथा नैवास्ति भारते ।
सर्वोऽन्यव्यवहारेषु, शीलव्यसनसाम्यतः,
सर्वेषामेव संसर्गो दृश्यते भारतेऽपि च,
( कीटनिष्कुषितं किंतु काष्ठं यद्वन्, न तु दृढः )
जन्मवर्णाग्रहेणापि ग्रस्तानामिह सर्वशः :
भोजनोद्वाहयोरेव केवलं हि कुतो भ्रमः ?
"प्रत्यक्षं, चानुमानं च, शास्त्रं च विविधाऽगमं,
त्रयं सुविदितं कार्यं, धर्मशुद्धिमभीप्सता ;
आर्षं धर्मोपदेशं तु, वेदशास्त्राऽविरोधिना,
यस्तर्केणाऽनुसंधत्ते, स धर्मं वेद, नेतरः" । (म०)
न प्रत्यक्षं प्रमाणं वा, न तथा चाऽनुमानिकं,
नाऽगमीयं असंदिग्धं, जन्मवर्णाय लभ्यते ।
कर्मवर्णस्य सिद्ध्यर्थं लभ्यते ऽपि त्रयं बहु ।
यद्यस्ति सदृशः पुत्रो वर्णयोग्यतया पितुः,

नूनं तं लभतां वर्णं; को निवारयितुं क्षमः ?
नास्ति चेत् सदृशो, ऽन्यं हि प्राप्नोतु स्वगुणोचितं ।
(६) प्र० गुणः कोऽस्य, रुचिः काऽस्य, प्रवृत्तिः कीदृशी तथा,
किंवर्णयोग्यश्चैव—इति निर्णयं कः करिष्यति ?
उ० शिक्षाव्यूहस्तु बालानां सर्वेषां शिक्षणे रतः,
प्रकृतीनां च सर्वेषां निरीक्षक-परीक्षकः,
अध्यात्मविच् च, ज्योतिर्विद्, लक्षणानां नृणां च वित्,
पुं-सामुद्रिक-वेत्ता च,-अप्याऽयुर्वेदविदेव च,
द्रष्टा च व्यवहाराणां, विविधानुभवैर्युतः,
निश्चेतुमेतच् छक्तः स्यात्; नाऽन्यथा वृत्तिमाप्नुयात् ।
अन्नप्राशनसंस्कारेऽप्यस्ति दिष्टा परीक्षणा—
"कृतप्राशनं उत्सङ्गात् धात्री बालं समुत्सृजेत्;
कार्यं तस्य परिज्ञानं जीविकायाः अनन्तरं;
देवताऽग्रे ऽथ विन्यस्य शिल्पभांडानि सर्वशः,
शास्त्राणि चैव, शस्त्राणि, ततः पश्येत् तु लक्षणं;
प्रथमं यत् स्पृशेद् बालः ततो भांडं स्वयं तदा,
जीविका तस्य बालस्य तेनैव-इति भविष्यति" ।
(पारस्कर-गृह्यसूत्रं, गदाधर-भाष्यं, कां० १, कं० १९)
"अग्रतोऽथ प्रविन्यस्य रत्नभाण्डानि सर्वशः,
शास्त्राणि चैव, वस्त्राणि, ततः पश्येत् तु लक्षणं,
प्रथमं यत् स्पृशेद् बालो रिंगमाणः स्वयं तदा,
जीविका तस्य बालस्य तेनैव तु भविष्यति । (मार्कं०)
"तस्मिन् काले स्थापयेत् तत्पुरस्ताद्
वस्त्रं, शस्त्रं, लेखनीं, पुस्तकं च,
स्वर्णं, रौप्यं, यच्च गृह्णाति बालः,
तैः आजीवैः तस्य वृत्तिः प्रदिष्टा" । (अन्ये)

जन्मनैवोच्चनीचादि-दर्प-दैन्यादिकं न हि,
नाऽहंकार-तिरस्कारौ, न संघर्षौ, न मत्सरः,
नैवेर्ष्या-कलहैर्नित्यं कल्कनं प्रतिवेशिनां,
न युद्धानि, न दुर्भिक्षं, नापि रोगभयं भवेत्।
बहूनां शिक्षितत्वाच्च, द्विजत्वाद्, धर्म-बोधनात्,
नियंत्रणाच् च कामानां, इन्द्रियाणां च निग्रहात्,
आश्रयान् 'मध्य'-वृत्तेश्च, सर्वत्रापि-'अति'-वर्जनात्,
नात्यंतं निष्प्रजः कोऽपि, न चैवाति-प्रजस्तथा।
भूरिशो जनसम्बाधैर्, आहारार्थं विवादिभिः,
नाऽमुवद्भिरलं भोज्यं, स्पर्धमानैः परस्परं,
आक्रान्तायां यतो मह्यां, मात्स्यो न्यायः प्रवर्त्तते,
तस्मात् सन्तानबाहुल्यं नेष्यते दूरदर्शिभिः।
मितासु-अपि प्रजासु-इष्टं द्विज-भूयस्त्वं एव हि;
"यद्राष्ट्रं शूद्रभूयिष्ठं, नास्तिकाऽक्रान्तम्, अद्विजं,
विनश्यत्याशु तत्कृत्स्नं, दुर्भिक्ष-व्याधि-पीडितं"; (म०)
'अद्विजाः' खलु-अनात्मज्ञाः, 'शूद्राः', ये ह्रस्व-दर्शिनः,
न दीर्घदर्शिनो, विज्ञाः, कार्यकारणवेदिनः,
अनुबन्धं विजानन्तः कर्मणां दूरगामिनं;
येषां नास्ति-आयतेर्ज्ञानं, नास्ति-आत्मा देहतोऽपरः,
त एव 'नास्तिकाः' बालाः मूढाः नश्वरलोभिनः;
एतादृशानां बाहुल्यं यस्मिन् राष्ट्रे भवेत्, कथं
नाऽमर्यादं भवेत्तत्र सर्वमेवाऽधरोत्तरं?
राष्ट्रे तु 'द्विज'-भूयिष्ठे मर्यादा सम्प्रवर्त्तते;
युद्धं 'द्विजानां' यत्, तत् तु स्वान्तःकरणे एव हि,
प्रत्येकस्य मनुष्यस्य स्वस्वदुष्टाशयैः सह;
आत्मन्येव द्विधा भक्ते, उत्तमाऽधम-भेदतः,

अशुभेनैव मनसा युध्यति-अत्र शुभं मनः ;
निर्जित्यापि च तद्भूयः 'स्व'-राज्यं स्थापयत्यसौ ,
उत्तमः 'स्वः' सदा यस्मिन् अधमं 'स्वं' प्रशास्ति हि ।
"उद्धरेद् आत्मनात्मानं नात्मानं अवसादयेत् ;
आत्मैव हि-आत्मनो बंधुरात्मैव रिपुरात्मनः" ; ( गी० ).
"मनस्तु द्विविधं प्रोक्तं, शुद्धं, चाऽशुद्धमेव च ;
अशुद्धं कामसंकल्पं, शुद्धं कामपिवर्जितं" ; ( उ० )
जितात्मनां प्रशान्तानां निष्पक्षाणां मनीषिणां
राज्यमेव 'स्व-राज्यं' स्यात् ; नहि-एवाऽनात्मवेदिनां ।
सृष्टेर्द्वंद्वमयत्वात्तु, तत्रापि यदि दुर्जनाः
उद्भ्रन्त्येव, तदा क्षिप्रं निग्रहीष्यंति 'रक्षकाः' ,
उच्छेत्स्यन्ति च दुर्वृत्तान् उपायैः उचितैरपि ।
स्वे स्वे कर्मण्यभिरताः एवं सर्वेऽपि मानवाः
परस्परं सुमनसो भवेयुः प्रशमान्विताः ,
परस्परं प्रीतिमंतः, परस्परमनुव्रताः ,
सहोदराणामिव वा,ऽपि-एकदेहाङ्गवच्च वा ,
ज्ञानदास्, त्राणदाश्चापि, प्राणदाश्च, सहायदाः ।
(७) प्र० नूनं उक्तं हि गीतायां—"कार्यं कर्म समाचर ,
कर्मण्येवाऽधिकारस्ते, मा फलेषु कदाचन" ; (गी०)
यतंते किंतु विरलाः कृत्यबुद्ध्यैव केवलं ;
गुणोत्कर्षाय यत्नस्तु प्रोत्साहनमपेक्षते ;
उद्दीपनं भवेत् किन्तु गुणोत्कर्षप्रदर्शने ?
शंकाऽन्या चाऽपि—कृष्णेन द्विधा-उक्तं, मनुना तथा ;
"कामात्मता न प्रशस्ता, न चैवेहास्ति-अकामता" ,
"निष्कामं कर्म सेव्यं" चेति,-उभयं मनुनोच्यते ; (म०)।
"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ; ×

नैष्कर्म्यसिद्धिं परमां सन्यासेनाऽधिगच्छति", (गी०)
—कृष्णोऽपि द्विविधं चैवमाह व्यामोहकारकं ।
"कर्मणश्चापि वोद्धव्यं, बोद्धव्यं च विकर्मणः,
अकर्मणश्च वोद्धव्यं, गहना कर्मणो गतिः" । (गी०)
उ० पारिभाषिकसंज्ञानां ज्ञानाद् अत्र समन्वयः,
विरोधपरिहारश्च सर्वशंकानिरासकः ;
कृष्णेन मनुना चापि सूचितं हि स्वयं यथा ;
"सुखाभ्युदयिकं चैव, नैःश्रेयसिकमेव च,
प्रवृत्तं च निवृत्तं च, द्विविधं कर्म वैदिकं ;
इह चाऽमुत्र वा 'काम्यं' 'प्रवृत्तं' कर्म कीर्त्यते ;
'निष्कामं' ज्ञानपूर्वं तु 'निवृत्तं' उपदिश्यते ;
प्रवृत्तं कर्म संसेव्य देवानां एति साम्यतां ;
निवृत्तं सेवमानस्तु भूतान्यत्येति पंच वै" । (म०)
"न कर्मणां अनारम्भात् 'नैष्कर्म्यं' पुरुषोऽश्नुते ; ×
असक्तबुद्धिः सर्वत्र, जितात्मा, विगतस्पृहः,
नैष्कर्म्यसिद्धिं परमां सन्यासेनाऽधिगच्छति ;
'काम्यानां' कर्मणां न्यासं 'सन्यासं' कवयो विदुः",
(न यौवनेऽपि बाल्येऽपि काषायाऽदिकवेशनं,
विना तपो, विना विद्यां, सदाचारं विनाऽपि च,
गृहस्थानां च भारस्य स्वार्थाय बहुवर्धनं) ;
"सर्वकर्मफलत्यागं प्राहुः त्यागं विचक्षणाः" । (गी०)
अयमत्राऽभिसंधिः स्याद्, इदं आकूतमेव च,
यथा हि-'अविद्या', विद्यायाः न-अभावः किल केवलं,
किंतु भावमयी भ्रान्तिः, मिथ्या-ज्ञानं, असद्-ग्रहः,
"अतस्मिंश्चाऽपि तद्बुद्धिः", रज्जौ सर्पभ्रमो यथा ;
यथा-अ-मित्रं तु मित्रत्वाऽभावः एव न केवलं,

किंतु शत्रुः; यथा चापि दुःखमेव-अ-सुखं पुनः ;
तथा 'नैष्काम्य'-'नैष्कर्म्यं' न नूनं काम-कर्मणोः
अभावमात्रं, किंतु एते विशिष्टे काम-कर्मणी ;
ऋण-निर्मोचकं 'कर्म' 'नैष्कर्म्यं' इति भण्यते ;
ऋणबंधविमुक्तेश्च 'कामो' 'नैष्काम्यं' उच्यते ;
'प्रवृत्तं' ऋणकृत् 'काम्यं', 'निष्कामं' तु 'निवर्त्तकं' ;
'आरम्भकं'तु 'कर्म' स्यात्, 'निष्कर्म' तु 'समापकं' ।
एवं कर्मफलाऽसक्तिः निवृत्तेन-उपदिश्यते ,
निवृत्त्युन्मुखलोकाय; न प्रवृत्तजनाय तु ।
प्रवृत्ति-बुद्ध्या स्वं धर्मकर्मादि-आचरतां,पुनः,
युक्तानि-अपेक्षितान्येव सदा प्रोत्साहकानि हि ।
नूनं गुणविशिष्टानां विशिष्टं पारितोषिकं ।
समाजकल्याणकराः, नाऽन्ये, तत्र 'गुणाः' स्मृताः ।
"वित्तं, बंधुः, वयः, कर्म, विद्या, भवति पंचमी ;
एतानि मानस्थानानि; गरीयो यद्यद् उत्तरं ;
पंचानां, त्रिषु वर्णेषु, भूयांसि, गुणवन्ति च ,
यत्र स्युः सोऽत्र मानाऽर्हः; शूद्रश्च दशमी गतः" । (म०)
( विद्या विप्रे, धनं वैश्ये, क्षत्रे शक्तिश्च कर्मणः ,
वयो बंधुः समानौ च, कीर्तितास्तु विशेषतः ) ।
"विप्राणां ज्ञानतो ज्यैष्ठ्यं, क्षत्रियाणां तु वीर्यतः ,
वैश्यानां धान्यधनतः, शूद्राणां वयसैव च" । ( म० )
ज्ञानदोऽधिकसम्मानं; ईशितां अधिकां तथा
त्राणदः; प्राणदश्चैवं अधिकं वित्तमर्हति ;
विनोदं अधिकं चापि कांक्षत्येव सहायदः ।
हृदयाऽप्यायकानेतान् लब्ध्वा चोत्साहवर्धनान् ,
प्रत्येकस्य स्वधर्मस्याऽवश्यकीयांश्च साधनान् ,

"स्वे स्वे कर्मण्यभिरतः" सिद्धिं सर्वोऽपि लप्स्यते।
"स किंसखा साधु न शास्ति योऽधिपं,
हितान् न यः संशृणुते स किं प्रभुः";
समाजसंग्राहकमेव नैव यत्
विग्राहकं प्रत्युत, शास्त्रमस्ति 'किं'।
अभ्यस्यंते इदानी तु यानि शास्त्राणि संस्कृते,
नोपकारीणि तानीह व्यवहारे मनागपि,
( आयुर्वेदं ऋते, किंचिन्मात्रं च ज्योतिषं तथा ),
प्रत्युताऽपि विहन्तॄणि व्यवहारस्य वै भृशं ;
शास्त्रस्य व्यवहारस्य पार्थक्यात् पतितौ-उभौ ;
उद्धारायोभयोस्तस्माद् यत्नः कार्यो बुधैर्भृशं,
शब्दानां उत्तमार्थानां प्राचीनानां निरुक्तिभिः,
अध्यात्मदृष्ट्या तेषां च व्यवहारे प्रयोजनैः।
स्वभावगुणनिर्दिष्टकर्मणा यदि वर्णता
भवेत्, तदा मनुष्याणां जीवनस्याऽनुबंधिनः
प्रश्नाः सर्वेऽत्यनायासं उत्तीर्येरन् सुखेन ते,
प्रश्नैर्यैरेव कालेऽस्मिन् नृलोको व्याकुलीकृतः—
कथं शिक्षा, कथं रक्षा, कथं चोदरपूरणं,
कथं वस्त्रं, कथं वासः, कथं मन्मथतर्पणं ;
चतसृणां एषणानां कथं चोचिततोषणं ;
चतुर्णां पुरुषार्थानां सम्यक् सम्पादनं कथं ;
पति-पत्नी-पुत्र-पुत्री-पितृ-मात्रादयः, तथा
भ्रातृ-स्वसृ-मित्र-शत्रु-प्रतिस्पर्धि-सहायकाः,
भावाः ये ईदृशाः जीवसम्बन्धैरुद्भवंति हि,
सुखदुःखमयाः, येषां द्वंद्वानां अनुभूतये
जीवो देहं उपाधत्ते, तेषां अनुभवः कथं

अधिकेन सुखेन स्यात्, दुःखेनाऽल्पतमेन च ;
कथं विनोदः, आमोदः, क्रीड़ाः, आनन्दनं तथा ,
परस्पराऽनभिद्रोहो, द्रोहोऽल्पो ह्यथवा पुनः ;
राष्ट्राणां सहगामित्वं, न परस्परसंगरः ,
रणकंड्वाः तथा शांतिः सर्वेषां च, कथं भवेत् ?—
ईदृशानामशेषाणां प्रश्नानाम्पूर्णमुत्तरं ,
'कर्मणा वर्णः' इत्येतन्मंत्रेणाऽपाद्यते ध्रुवं ।
विशीर्णजीर्णसंकीर्णां आर्यां भारत-संस्कृतिं
उद्धर्त्तुं, प्रणवीकर्त्तुं, नाऽन्यां जानीमहे वयं
रीतिं नीतिं, विहायैकां विशुद्धां 'कर्मवर्णतां' ।
कर्मणैव हि वर्णः स्यात्; कर्माऽपि गुणतस्तथा ;
गुणः स्वभावजश्चापि शिक्षया विशदीकृतः ।
जन्माऽपि चेद् भवेद् अस्य तादृक्कर्ममये कुले ,
भूयः स्यात् कर्मणः पुष्टिः, सौन्दर्यस्येव मंडनैः।
उत्तमं जन्मकर्मभ्यां, कर्मणैव तु मध्यमं ,
नास्त्येव केवलं जात्या, वर्णवत्त्वं, इति स्मृतं ।
(८) प्र० प्रश्नोऽयं संभवत्यत्र—सुव्यवस्था यदि-ईदृशी
कर्मवर्णात्मिका पूर्वं, कस्माद् भ्रष्टा ? कथं न सा
रक्षितुं स्वं समर्थाऽभूद्, एवं युक्तिमती सती ?
उ० न हि-औषधं प्रवेष्टुं स्यात् शक्तं, अप्युत्तमोत्तमं ,
विना-उपचारिहस्तेन, रोगिणस्तु मुखं स्वयं ।
जनतायाः व्यवस्था एवं, अपि सुष्ठुतमा सती ,
उद्युक्तत्वं प्रयोक्तृत्वं ब्रह्म-क्षत्रस्य कांक्षते ।
ज्ञानाङ्गे च, क्रियाङ्गे च, मस्तके, भुजयोरपि ,
कल्याणसाधनं सर्वं शरीरस्याश्रितं सदा ;
नयनं रक्षणं चाऽभ्यां उदरोर्वोर्विधीयते ।

उत्तमांगे तु विभ्रष्टे नष्टं सर्वं तु तत्क्षणं ;
मस्तके विकृते, वाहू विकुर्वाते, तथोदरं
न स्वकार्यं करोति, एवं पादौ-उन्मार्गं ऋच्छतः।
"प्रज्ञाऽपराधाद् हि-अहितान् अर्थान् पंच निषेवते", (चरक०)
ततो वहुविधाः रोगाः पीडयंत्येनं अंजसा।
'मूला' तु भवरोगस्य, 'तूला' क्षुद्ररुजां तथा,
'अ-विद्यैव' हि रोगाणां सर्वेषां मूलं आदिमं ;
सा सा विद्या च रोगाणां सर्वेषां एव भेषजं।
प्रज्ञा-दोषेण जायन्ते आधयो व्याधयस्तथा ;
द्रव्यैश्चिकित्सा व्याधीनां, आधीनां आत्मविद्यया,
द्रव्याणां भेषजत्वं च विद्ययैवावगम्यते ;
"नाऽमंत्रं अक्षरं किंचिन्, न च द्रव्यं अनौषधं,
नाऽयोग्यः पुरुषः कश्चित्, प्रयोक्तैव तु दुर्लभः"।(मत्स्य पु०)
ब्राह्मणम्मन्यमानेषु तपो-विद्या-विलोपनात्,
वर्चसस्तेजसो ह्रासात्, भूमिपानां अयंत्रणात्,
निर्मर्यादतया राज्ञां, स्वाच्छंद्यात्, पापकृत्तया,
"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः", ( गी० )
इति न्यायेन सर्वत्र पापबुद्धिप्रविस्तरात्,
समग्रं भारतं वर्षं वर्त्तमानां दशां अगात्।
"ब्राह्मणं तु स्वकर्मस्थं दृष्ट्वा बिभ्यति चेतरे,
नाऽन्यथा, क्षत्रियाद्यास्तु; विप्रस्तस्मात्तपश्चरेत्" ; (शु०नी०)
"क्षत्रस्याऽति प्रवृद्धस्य, ब्राह्मणान् प्रति सर्वशः,
ब्रह्मैव संनियंतृ स्यात्, क्षत्रं हि ब्रह्मसम्भवं"। ( म० )
वहवो दंडिताः पूर्वं भूपाः उत्पथगामिनः,
हताश्च धर्महन्तारः प्रजापीडनकारिणः,
ज्वलनैरिव तेजोभिः तपसां, परमर्षिभिः।

"वेनो विनष्टोऽविनयान्, नहुषश्च नराधिपः।
सुदाः पैजवनश्चापि, सुमुखो, निमिरेव च; ×
(दंडकः, कार्त्तवीर्यश्च, समग्रं यादवं कुलं,) ×
स्ववीर्याद् राजवीर्याच् च स्ववीर्यं वलवत्तरं,
तस्मात्स्वेनैव वीर्येण निगृह्णीयाद् अरीन् द्विजः; ×
यद् दुस्तरं, यद् दुरापं, यद् दुर्गं, यच् च दुष्करं,
सर्वं तत् तपसा साध्यं, तपो हि दुरतिक्रमं; ×
तपो विद्या च विप्रस्य निःश्रेयसकरं स्मृतं,
तपसा किल्विषं हंति, विद्ययाऽमृतमश्नुते"; (म०)
"न वलं क्षत्रियस्याहुः, ब्राह्मणो वलवत्तरः; ×
धिग्वलं क्षत्रियवलं, ब्रह्मतेजोवलं वलं;
एकेन ब्रह्मदंडेन सर्वास्त्राणि हतानि मे":
(वा० रामा०, वा० कां०, अ० ५४-५६)
एवं तु निर्विवेदाऽसौ, वसिष्ठेन पराजितः,
यं विश्वमपि संक्रुद्धं मित्रं कर्त्तुं तु नाऽशकत्,
विश्वामित्रो हि; यः पश्चात्, तपस्तप्त्वा महत्तमं,
विश्वस्य मित्रं, ब्रह्मर्षिः, गायत्रीमंत्रकृत् तथा,
वभूव; यां महादेवी सावित्रीं 'वेदमातरं',
सर्वशक्तिसमाहर्त्रीं, तपःसारस्वरूपिणीं,
सर्वज्ञानप्रसविनीं, 'द्विजाः' सर्वे उपासते।
प्राड्विवाकवद् एव-एतान् भूपतींस्तु महर्षयः,
तपःकृशाः, वृहद्भासः, पर्यैक्षन्त पुनः पुनः—
'अस्ति ते विषये कश्चिच् चोरो, मिथ्याप्रवंचकः,
व्यभिचारी, दुराचारी, स्वधर्मविमुखोऽथवा,
अशिक्षितो, दरिद्रो वा, गर्वालुः, परपीड़कः,
विद्या-रूप-धन-ऐश्वर्य-वल-अभिजन-दर्पितः?'

'नास्तीदृशोऽस्मद्विषये'-नृपाः उदतरँस्तथा।
नेदृशाः ब्राह्मणाः संति; क्षत्रियाः संति नेदृशाः ;
चारित्र्यनाशादुभयोः भारताः निरयं गताः।
"अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात्,
रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः" ; (म०)
राजोत्पत्तिसमाख्याने व्यस्तमेतत्तु भारते ;
"धर्माय राजा भवति, न कामकरणाय तु ;
यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगं,
गर्भस्य हितमाधत्ते, तथा राज्ञाऽप्यसंशयं
वर्त्तितव्यं, कुरुश्रेष्ठ, सदा धर्मानुवर्त्तिना,
स्वं प्रियं तु परित्यज्य, यद्यल्लोकहितं भवेत्" ;(म०भा०)
अभिषेके नृपाणां च प्रतिज्ञा तैः अकार्यत—
"प्रतिज्ञां चाधिरोहस्व, मनसा कर्मणा गिरा
पालयिष्याम्यहं भौमं ब्रह्म ( भूगताः 'ब्रह्मणः' प्रजाः ),
इत्येव चाऽसकृत्,
यश्चापि धर्म इत्युक्तो, दंडनीतिव्यपाश्रयः,
तं अशंकः करिष्यामि, स्ववशो न कथंचन" ; (म०भा०)
"ब्राह्मणैः क्षत्रबन्धुर्हि द्वारपालो नियोजितः,
स कथं तद् गृहे द्वास्थः सभांडं भोक्तुमर्हति ?
अहो अधर्मः पालानां पीव्नां बलिभुजां इव,
स्वामिनि-अघं यद् दासानां, द्वारपानां शुनामिव"। (भा०)
भ्रष्टेषु ब्राह्मणेष्वेवं, विभ्रष्टाः क्षत्रियाः अपि,
सर्वा वर्णव्यवस्था च सर्वथा व्यर्थतां गता ;
"दमनाद् दंडनाद् दंडः, नयनान्नीतिरुच्यते", (म०भा०)
दंडस्य सत्प्रणेतॄणां, वक्तॄणां सन्नयस्य च,
भ्रंशाद्, अभावाच्चैवापि, दुर्नयो ह्येव राजते।

(९) प्र० सगर्वं पृच्छ्यते कैश्चिज् जातिब्राह्मणमानिभिः--

"उच्चैः स्थितिर्जगति सिध्यति धर्मतश्चेत्,
तस्य प्रमा च वचनैः कृतकेतरैश्चेत्,
तेषां प्रकाशनदशा च महीसुरैश्चेत्,
तानन्तरेण निपतेत् क नु मत्प्रणामः?"

उ० अस्योत्तरं तादृगेव, किंतु संवादकारकं--

धर्मस्थितिर्जगति सिध्यति दंडतश्चेत्,
तस्य प्रणीतिरपि वाहुबलैर्दृढैश्चेत्,
तेषां प्रदर्शनदशा च महीश्वरैश्चेत्,
तानन्तरेण निपतेत् क नु मत्प्रणामः?
धर्मप्रवक्तुरथ दंडधरस्य चापि
प्राणस्थितिर्यदि भवेन् न विनाऽन्नपानैः,
तेषां जनोद् ननु महीकृषकैर्दशा चेत्,
तानन्तरेण निपतेत् क नु मत्प्रणामः?
मह्याः सुराश्च, पतयो, ऽप्यथ कर्षकाश्च,
निष्पादरुंडमिव यद्रहिताः लुठेयुः
मह्यां; वहंति, गमयंति, विधारयंति,
संभारयंति-अवरजाः, सकलान् परान् ये;
सौजन्यतः स्वम् अवरान्, अपरान् वराँश्च
स्वीकुर्वते; सुकठिनश्रमिणः सदैव,
भारं स्वकं च परकं च समुद्वहंति;
तानन्तरेण निपतेत् क नु मत्प्रणामः।
न पुस्तकं, न च दंडं, न काञ्चनं,
न शारीरं श्रमं एवापि केवलं,
किं तु-एतेषां सकलानां हि संघं
सर्वे गुणाः सर्वदा-एवाऽश्रयंति।

(१०)प्र०(क) "सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः, ×
बुद्धिमत्सु नराः श्रेष्ठाः, नरेषु ब्राह्मणाः स्मृताः, ×
सर्वं स्वं ब्राह्मणस्येदं यत् किंचिज् जगती गतं ; ×
(ख) राजाऽग्निश्चापि, वायुश्च, सोऽर्कः, सोमः, स धर्मराट्,
स कुबेरः, स वरुणः, स महेन्द्रः प्रभावतः, ×
महती देवता ह्येषा नररूपेण तिष्ठति ; ×
(ग) पौंश्चल्याच्, चलचित्ताच्च, नैस्नेह्याच् च स्वभावतः,
रक्षिताः यत्नतोऽपीह भर्तृष्वेताः विकुर्वते ; ×
शय्यासनं, अलंकारं, कामं, क्रोधं, अनार्जवं,
द्रोहभावं, कुचर्यां च, स्त्रीभ्यो मनुरकल्पयत्"; × (म०)
ब्राह्मणानां प्रशंसा-इयं, राज्ञां च महती तथा,
नारीणां घोरनिन्दा च, यत् स्वयं मनुना कृता,
उपेक्षणीयं एव-एतत् सर्वं, मिथ्यावद् एव, किं ?
उ० मैवं; किंतु मनोरर्थः खंडपाठैर्विखंड्यते ;
पूर्वापरेण सम्पूर्णे पाठे, सोऽर्थोऽवदायते ।
सर्वत्र हेतुपूर्वं हि श्लाघा, गर्हा ऽथवा, कृता
मनुना; न विना हेतुं, 'जाति'-मात्रेण केवलं ;
प्रत्युताऽनेन निन्दैव 'जाति'-मात्रस्य भाषिता ;
स्वधर्मकर्मानुष्ठातुः एव तेन कृता स्तुतिः ;
कर्मणः श्रैष्ठ्यं-एव-एवं पुनः ख्यातं; न जन्मनः ।
(क) "उत्तमांगोद्भवाज्, ज्यैष्ठ्याद् ब्रह्मणश्चैव धारणात् ; ×
स हि धर्मार्थमुत्पन्नो धर्मकोशस्य गुप्तये ×
आनृशंस्याद् ब्राह्मणस्य भुंजते हि-इतरे जनाः ×
यो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्, मातेव स पितेव सः"; × (म०)
यत्र-'उत्तमांगं' न ज्ञानं, तत्र ब्राह्मण्यमस्ति किं ?
न ज्यैष्ठ्यं, नैव वा 'ब्रह्म', यस्मिन्, स ब्राह्मणः कथं ?

धर्मगुप्ति-आनृशंस्याभ्यां विना स्यात् किं नु विप्रता ?
"यथा काष्ठमयो हस्ती, यथा चर्ममयो मृगः,
तथा विप्रोऽनधीयानः, त्रयस्ते नाम बिभ्रति" ; × (म०)
महार्थं जातु नाम-अपि न-एष 'ब्राह्मणं' अर्हति ।
विड़ाल-वक-वृत्तीनां, जातिमात्रोपजीविनां,
ब्राह्मण-ब्रव-जीवानां, बहुशो गर्हणं कृतं
मनुना यत् स्वयं, तत्तु पूर्वमेवास्त्युदाहृतं ।
( ख ) जुगुप्सा दुष्टराजानां उक्ता-एवं, दंड्यता तथा ।
"रक्षार्थमस्य सर्वस्य राजानं असृजत् प्रभुः" ; (म०)
"अहं वो रक्षिता-इत्युक्त्वा, यो न रक्षति भूमिपः,
स संहत्य निहंतव्यः श्वा-इव सोन्मादः आतुरः ;
(म० भा० अनु० अ० ९६)
अधर्मदर्शी यो राजा बलादेव प्रवर्त्तते,
असत्पापिष्टसचिवो, वध्यो लोकस्य धर्महा ;
( ,, शां० ९२ )
दुराचारान्यदा राजा प्रदुष्टान्न नियच्छति,
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव,
तं प्रजाः नानुरज्यंते, न सद्-विप्राः, न साधवः,
ततः स क्षयमाप्नोति, तथा वध्यत्वमेव च ; × (,, १२३)
यो राजा लोभमोहेन किंचित्कुर्यादसांप्रतं,
सर्वोपायैर्नियम्यः स, यथा पापान्निवर्त्तते" ; (,,२७३)
"नृपार्थे सर्वभूतानां गोप्तारं धर्मं आत्मजं
ब्रह्म-(विज्ञान)-तेजोमयं दंडं असृजत् पूर्वं ईश्वरः ;
दंडो हि वस्तुतो राजा, स नेता, शासिता च सः,
चतुर्वर्णाश्रमाणां च धर्माणां प्रतिभूः स्मृतः ;
दंडः शास्ति प्रजाः सर्वाः दंड एवाभिरक्षति,

दंडः सुप्तेषु जागर्त्ति, दंडं धर्मं विदुर्बुधाः ;
समीक्ष्य स धृतः सम्यक्, सर्वाः रंजयति प्रजाः ,
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ;
यदि न प्रणयेद् राजा दंडं दंड्येषु-अतंद्रितः ,
शूले मत्स्यानिव-अपक्ष्यन् दुर्वलान् वलवत्तराः ;
सर्वो दंडजितो लोको, दुर्लभो हि शुचिर्नरः ,
दंडस्य हि भयात् सर्वं जगद् धर्मे प्रतिष्ठते ;
दुष्येयुः सर्वधर्माश्च, भिद्येरन् सर्वसेतवः ,
सर्वलोकप्रकोपश्च भवेद् दंडस्य विभ्रमात् ;
तस्याहुः सम्प्रणेतारं राजानं सत्यवादिनं ,
समीक्ष्यकारिणं, प्राज्ञं, धर्म-कामा-ऽर्थ-कोविदं ;
तं राजा प्रणयन् सम्यक्, त्रिवर्गेणाभिवर्धते ;
कामात्मा विषमः क्षुद्रो, दंडेनैव निहन्यते ;
धर्माद्विचलितो दंडो नृपं हन्ति सवान्धवं ," × (म०)
भगवान् ईदृशैः श्लोकैः शास्ति निःसंशयं मनुः ,
स एव ब्राह्मणो मान्यः यस् तद्गुण-विभूषितः ,
स एव क्षत्रियो राजा धर्मात्मा रक्षकश्च यः ,
समीक्ष्यकारी सद्वादी प्राज्ञः सच्छास्त्रकोविदः ;
न पुनर्ब्राह्मणम्मन्यः, क्षत्रियम्मन्यः एव वा ,
गुणैः सर्वैर्विहीनश्च, पापकर्मा च नित्यशः ;
उभौ-एतादृशो दंड्यौ मनुना-उक्तौ पुनः पुनः ।
"दश-सूना-समं चक्रं, दश-चक्र-समो ध्वजः ,
दश-ध्वज-समो वेशः, दश-वेश-समो नृपः" ; ( म० )
'चक्रं' तु 'भैरवीचक्रं' अत्र 'स्याद्' 'वंधकीगृहं' ,
भोजनादिप्रदानेन, 'वंधनैः' ऋणरूपिभिः ,
विक्रीयंते ऽवलाः 'वद्धाः' पण्यवद् यत्र राक्षसैः ,

यत्र स्त्रीणां शरीराणि क्रीयंते घोरपापिभिः,
स्वेषां तासां तथा जीवाः पात्यंते रौरवेष्वपि;
( न तैलिकस्य 'चक्रं' तु तादृग् भवति दोषवत्,
व्याख्यातृभिः यथा कैश्चिन् नाऽवधानेन लिख्यते; ).
'चक्रे'ऽबलाः तु हिंस्यंते, 'सूनायां' पशवो यथा,
ततोऽपि दारुणतरैः प्रकारैः कामगूहितैः;
भोजनार्थं शरीरं स्वं स्त्री विक्रीणाति यत्र वै,
शरीरं तच्च क्रीणाति वृकवन् निर्दयो नरः,
स्वं मातरं न स्मरति, न स्वसारं, न पुत्रिकां,
न सीतां, न च सावित्रीं, ततो दुःखतरं नु किं?
अवलाः व्याकुलाः यत्र रुदंति च शपंति च,
निष्ठुरैः अर्दिताः दुष्टैः, स्वकामस्यैव तृप्तये,
विनश्यति-अचिराद् राष्ट्रं तत् तु कृत्याहतं यथा।
'ध्वज'वान् शौंडिकश्चापि 'चक्रा'दपि-अघवत्तरः,
यतो नराः मद्यमत्ताः 'चक्राणि' प्रविशंति हि;
बृहत् कुलं यादवानां, स्वयं कृष्णेन वर्धितं,
अधृष्यं सर्वभूतानां, मद्येनैव विनाशितं।
'ध्वजा'च्च दारुणा 'वेश्या', या नर्त्तनकलादिभिः,
न-उषित्वा कृपणे 'चक्रे', 'भद्रान'पि विमोहयेत्,
प्रलोभनैर् हावभावैः सुरामपि च पाययेत्,
सुरापं चापि-अकृत्येषु घोरेष्वपि निपातयेत्,
संचारयेच्-च-अघं राष्ट्रेऽखिले, देहे विषं यथा।
"दश सूनासहस्राणि यो वाहयति सौनिकः,
तेन तुल्यः स्मृतो राजा लुब्धश्चोच्छास्त्रवर्त्तनः"; (म०)
यतो लोभी नृपः 'सूना-चक्र-ध्वज'-वतां अपि,
तथैव 'वेशाऽजीवानां' करं गृह्णाति निस्त्रपः,

गृहीत्वा च करं, तेषां पापं पुष्णाति भूरिशः।
"यो राज्ञः प्रतिगृह्णाति" तादृशाद् ब्राह्मणब्रुवः
स पाप-पोषणाद् "याति नरकान् एकविंशतिं";
राजानं च प्रजाश्चापि निपातयति तत्र सः।
उदारः आशयो ह्येवं नूनं भगवतो मनोः,
न जाति-ब्रह्म क्षत्राणां भगवान् अनुमोदकः।
"ब्रह्मबन्धुर्न हंतव्यः सर्वपापेष्वपि स्थितः"—
इत्यस्मिन् विषये पूर्वं विस्तरेण विचारितं;
स्थले जले तथाऽकाशे येषां अविहता गतिः,
देववद् विहरन्तश्च, प्रहरन्तश्च दैत्यवत्,
यथेष्टं विभवन्तश्च सर्वत्र प्रभवंति ये,
अन्यायं आचरंतोऽपि दुर्बलेषु पुनः पुनः,
तेऽपि नैतादृशं वक्तुं ईहन्ते खलु निस्त्रपं—
'न जातु हन्याद् अंग्रेज़ं सर्वपापेष्वपि स्थितं;
अंग्रेज़ो नाऽवमंतव्यः सद् असद् वा समाचरन्'।
यैर् इन्द्रविद्युद् आच्छिन्ना, वायुर्वीजनकः कृतः,
कृतौ कृशानु-वरुणौ दासौ दीप-प्रपा-धरौ,
अंगुलि-अग्र-इङ्गितेन-एव किंकराः कर्मकारिणः;
समर्थाः सर्वथा कर्त्तुं, अकर्त्तुं, ये, तथाऽन्यथा;
न-ईदृशं तेऽपि कत्थंते; धृष्टं विदधते न वा,
तस्मिन् दंडविधाने, यद्, विहितं तैः, प्रवर्त्तते
समस्ते भारते वर्षे, व्यवधूय-अभिभूय च
स्मृत्यादीनि पुराणानि शास्त्राणि निखिलानि च।
सुन्दोपसुन्दन्यायेन क्षयं यास्यंति तेऽपि यत्,
तत् फलं खलु पापानां तेषां; नाऽसद्गुणैः कृतं।
यत्र कंदर्पवाहुल्यं, दर्पोद्रेको, विकत्थनं,

वैरं परस्परं, नाशो, ऽवश्यं तत्र प्रवर्त्तते ।
दृश्यंते चेदृशाः भावाः बुद्धिविद्यावतामपि ;
"ज्ञानिनामपि चेतांसि देवी भगवती हि सा ,
वलाद् आकृष्य मोहाय महामाया प्रयच्छति" ; (दु०स०)
सद्बुद्धिरथ विद्या च दुष्प्रकृत्या विवर्त्यते ;
"प्रकृतिं यान्ति भूतानि, निग्रहः किं करिष्यति" ; (गी०)
अत एव हि वेदाऽज्ञा, 'विद्यां दुष्टाय मा दिश' ;
"दुग्धपानं भुजंगानां केवलं विषवर्धनं" ,
ज्ञानदानं च दुष्टेभ्यः केवलं पापवर्धनं ;
'भौतिकं' चाऽति 'विज्ञानं', 'प्रज्ञानेन'-अपवित्रितं ,
परस्परवधायैव पापिनस्तु प्रयुंजते ;
यथा पाश्चात्यजातीनां दुर्दान्तानां दशाऽद्य वै ।
हिन्दवः 'शास्त्र-शास्त्रे'ति 'वेद-वेदेति' राविणः ,
न वेद-शास्त्र-मर्माणां रहस्यानां च वेदिनः ,
असच्छास्त्रग्रहग्रस्ताः, त्रस्ताः सच्छास्त्रतो भृशं ,
परपादतले क्षिप्ताः, दृप्ताः स्वेषु तथाऽप्यहो,
दंद्रम्यंतेऽनिशं भीताः, नीताः मूढैर्‌अधोगतिं ,
दंडं प्रवंचयद्भिश्च, "सर्वपापेष्ववस्थितैः" ।
जन्मनैव हि वर्णस्य सर्वं विक्रीडितं त्विदं ।
एकजेभ्यो द्विजातीनां दंडस्तीव्रतरः धृतः
मनुना—पूर्वं एव-एतत् तद्वाक्यैरेव दर्शितं ।
अन्यच् च तत्र वक्तव्यं एतद् अत्राऽवशिष्यते—
रामो नाम महाराजः, मर्यादापुरुषः, स्वयं
'ब्राह्मणं' निजघानैव रावणं 'कर्म-राक्षसं' ,
पुलस्त्यस्य ऋषेः पौत्रं, महाविद्याधरं तथा ,
शास्त्राणां च समग्राणां कोविदं, भृशदुर्मदं ;

ब्रह्म-रक्षःकुलं दुष्टं समग्रं चाऽप्यशातयत् ;
बालिनं वानरं चैव, भ्रातरि-अन्यायकारिणं,
कृतसख्यं रावणेन, न्यवधीद् एव पापिनं ;
शिश्लेषाऽपि हनूमन्तं, सुग्रीवं च, विवेकतः ;
काश्यपं च हिरण्याक्षं 'जाति-ब्राह्मण'मेव च,
तथा हिरण्यकशिपुं, विष्णुर्व्यापादयत् स्वयं ;
कृष्णश्च बलरामश्च मैन्द-द्विविद-वानरौ
जघ्नतुर्मथुरायां वै, दुर्बलानां तु भीषणौ,
दुष्टं गोवृषभं चापि 'धेनुका-ऽसुर'नामकं,
'गो-ब्राह्मण'-हितौ सन्तौ, 'गोवर्धन'मखंकरौ ।
गो-ब्राह्मणानां पूजा यद् हिन्दुभ्यः उपदिश्यते,
सत्याद् विवेकाद् अर्थस्तु तस्याश्च ध्वंसितो मुधा ;
'गावस्तु' मातृवात्सल्यं, 'ब्राह्मणो' ज्ञानसंचयः,
एतौ यत्रैव पूज्येते, समृद्धेस्तत्र सश्रयः ;
न मिथ्या-ब्राह्मणानां वा पशूनां एव पूजनैः ।
"दुष्टानां निग्रहश्चापि शिष्टानां चापि संग्रहः",
इत्येव राज्ञो धर्मोऽस्ति, गोषु वा ब्राह्मणेषु वा,
नृपु-अन्येषु च, तिर्यक्षु, रक्षःसु-अपि,-असुरेष्वपि ;
विष्णुना प्रापितो राज्यं प्रह्लादश्च, विभीषणः,
पिता विशस्तस्त्वेकस्य, भ्रातरावपरस्य च ।
"पिता,ऽचार्यः, सुहृन्, माता, भार्या, पुत्रः, पुरोहितः,
नाऽदंड्यो नाम राज्ञोऽस्ति, यः स्वधर्मे न तिष्ठति" । (म०)
"किं अनडुहा यो न वहेत्, कोऽर्थो राज्ञाऽपि-अरक्षता ?
यथा दारुमयो हस्ती, पथि क्षेत्रं यथोषरं,
तथा विप्रोऽनधीयानो, राजा यश्च न रक्षिता ;
नित्यं यस्तु सतो रक्षेद्, असतश्च निवारयेत्,

स एव राजा कर्त्तव्यः, तेन सर्वमिदं धृतं" ।(म०भा०शां०)
'कर्त्तव्यः' इति शब्देन, प्रजानां दर्शिता स्फुटं
शक्तिश्चाधिकृतिश्चापि, राजत्वे विनियोजने
धीरवीरनरस्यैव, भूपितस्य च सद्गुणैः ।
आयत्तं लोककल्याणं 'द्वि-जातेषु' 'द्वि-जे'ष्विति ;
आत्मज्ञे शिक्षके चापि, रक्षके, पोषके तथा ;
"माता, पिता, तथाऽचार्यः, त एव त्रयः आश्रमाः ,
त्रयो लोकाः, त्रयो वेदाः, त एवोक्तास्त्रयोऽग्नयः ;
त्रिषु-अप्रमाद्यन्-एतेषु, त्रीन् लोकान् विजयेन्नरः" ; (म०)
आचार्यः शिक्षकस्तत्र, पितृस्थानी च रक्षकः ,
मातृस्थानी पोषकश्च, लोककल्याणकारकाः ;
दुर्विप्रो, दुर्नृपश्चापि, दुःस्त्री, यद्वत् तु निंदिताः
मनुना; सन्-नृपः, तद्वत्, सती स्त्री, साधु शिक्षकः ,
देवेभ्योऽप्यधिकं तेन बहुशश्च प्रशंसिताः ;
(ग) "यत्र नार्यस्तु पूज्यंते रमन्ते तत्र देवताः ,
यत्रैतास्तु न पूज्यंते सर्वास्तत्राऽफलाः क्रियाः ;×
शोचंति जामयो यत्र विनश्यत्याशु तत्कुलं ,
न शोचंति तु यत्रैताः वर्धते तद्धि सर्वदा ;×
तस्मादेताः सदा पूज्याः भूषणाच्छादनाशनैः ,
भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ;×
प्रजनार्थं महाभागाः पूजार्हाः गृहदीप्तयः ;
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ;
उत्पादनं अपत्यस्य, जातस्य परिपालनं ,
प्रत्यहं लोकयात्रा च। प्रत्यक्षं स्त्रीनिबन्धनं ;
अपत्यं, धर्मकार्याणि, शुश्रूषा, रतिरुत्तमा ,
दाराऽधीनः तथा स्वर्गः पितॄणां आत्मनश्च ह ,

उपाध्यायान् दशाऽचार्यः, शताऽचार्यांस्तथा पिता,
सहस्रं तु पितॄन् माता, गौरवेणाऽतिरिच्यते" : (म०)
ब्राह्मणात्, क्षत्रियाच्चापि, शिक्षकाद्, रक्षकादपि,
पोषकस्थानिनी माता, गुरुत्वेन विशिष्यते;
एवमाद्रियते ऽत्युच्चैः स्त्री मनुर्; न तु निन्दति।
"द्वारं किं एकं नरकस्य ? नारी"—
स्याद् उक्तं एतन् नर-केण केन चित्;
'द्वारं नरो वै नरकस्य चैकं'—
नारी च वक्तुं न कथं समर्था ?
अग्रणीर्धीरवीराणां भीष्मोऽप्याह पितामहः—
"एवं स्त्री नाऽपराध्नोति; नर एवाऽपराध्यति :
व्युच्चरंश्च महादोषं नर एवाऽपराध्यति ;
नाऽपराधोऽस्ति नारीणां, नर एवाऽपराध्यति ;
सर्वकार्यापराध्यत्वान् नाऽपराध्यंति चांगनाः" ।
( म० भा० शां०, अ० २७२, चिरकार्युपाख्याने )
स्त्रियै पुमान्, यथा पुंसे स्त्री, संसृतिभयप्रदः :
तुल्यरूपेण चैवैतत् प्रोक्तं भागवते स्फुटं ;
'निवर्त्तमाना' नारी च तथैव बिभियान्नरात्,
यथा 'निवर्त्तमानो' ना नार्याः भीयात् समंततः ;
'नरो' 'नारी' च शब्दौ तौ 'काम'स्यैवाऽत्र वाचकौ,
प्रतीकाविव; न स्थाने आग्रहस्तु 'शरीरयोः' :
यद् एव विषयासङ्गकारकं वस्तु विद्यते,
तदेव 'नरकद्वारं', 'स्वर्गद्वारं' तथैव च,
तदेव सर्वथा वर्ज्यं प्रयत्नेन 'मुमुक्षुणा',
नरेण, नार्या चैवापि; न त्रिवर्ग-'बुभुक्षुणा' ।
"या-उपयाति शनैर्माया 'योषिद्' देव-विनिर्मिता,

तां ईक्षेत-आत्मनो मृत्युं, तृणैः कूपं इव-आवृतं ;
यां मन्यते पतिं मोहान् मन्मायां ऋषभायती,
तां आत्मनो विजानीयाद् वित्ता-ऽपत्य-गृह-प्रदं
दैवोपसादितं मृत्युं, मृगयोर्गायनं यथा"।
( भा० स्कं० ३, अ० ३२ )
स्त्रीपुंसोः समतैवोक्ता ऋषिभिः; वा ततोऽधिकं,
अर्धद्वयत्वं एकस्य देहस्यैवापि कीर्तितं ;
अर्धनारीश्वरो देवः प्रतीकस्तत्र शाश्वतः,
गिरा-चतुर्मुखौ चापि, लक्ष्मीनारायणौ तथा,
अपृथक्करणीयौ तौ-अनपायि निदर्शनं ;
"विप्राः प्राहुस्तथा चैतद्, यो भर्त्ता सा स्मृताङ्गना"। (म०)
"अनुष्ठास्यति रामस्य सीता प्रकृतं आसनं,
आत्मा हि दाराः सर्वेषां दारसंग्रहवर्त्तिनां,
आत्मा-इयं इति रामस्य पालयिष्यति मेदिनी" ; (वा० रा०)
एवं आह वसिष्ठो, यः इक्ष्वाकूणां 'पुरो-हितः',
रामेऽरण्यं पद्ममाने राष्ट्रस्य 'हित'-चिन्तकः।
अन्येषां च महर्षीणां अत्र चैवंविधा मतिः—
"नास्ति मातृसमा छाया, नास्ति मातृसमा गतिः,
नास्ति मातृसमं त्राणं, नास्ति मातृसमा प्रिया,
कुक्षौ संधारणाद् 'धात्री' जननाज् 'जननी' स्मृता,
अंगानां वर्धनाद् 'अम्बा', वीरसूत्वेन 'वीरसूः',
शिशोः शुश्रुषणात् 'शुश्रूः', माता देहमनन्तरं";(म० भा०)
"शंकरः पुरुषाः सर्वे, स्त्रियः सर्वाः महेश्वरी,
स्त्रीपुंसप्रभवं विश्वं, स्त्रीपुंसात्मकमेव च" ;
( शिवपु० वायु-सं० उ० खं० अ० ७ )
"गुणव्यक्तिरियं देवी व्यंजको गुणभुग् भवान् ;

त्वं हि सर्वशरीरी-आत्मा श्रीः शरीरेन्द्रियाश्रया ;
नामरूपे भगवती प्रत्ययस्त्वमपाश्रयः" , (भा० स्कं० ६ अ० १९)
"आत्मानं प्रकृतिं विद्धि, मां विद्धि पुरुषं शिवं ,
भवानर्धशरीरं मे, तव चाहं तथैव तु" ; (वा०पु० पूर्वा० अ० २५)
"किं चातिबहुनोक्तेन, संक्षेपेणेदमुच्यते ,
देवतिर्यङ्मनुष्यादौ पुन्नामा भगवान् हरिः ,
स्त्रीनाम्नी श्रीश्च विज्ञेया; नाऽनयोर्विद्यते परं" ;
(वि० पु० अं० १ अ० ८)
"अर्धं भार्या मनुष्यस्य, भार्या श्रेष्ठतमः सखा ,
भार्या मूलं त्रिवर्गस्य, भार्या मूलं तरिष्यतः
सखायः प्रविविक्तेषु भवंत्येताः प्रियंवदाः ,
पितरो धर्मकार्येषु, भवंत्यार्त्तस्य मातरः ,
आत्माऽत्मनैव जनितः पुत्र इत्युच्यते बुधैः ,
तस्माद् भार्यां नरः पश्येन् मातृवत् पुत्रमातरं" ;
(म० भा० आ० ९८)
विललाप, वनं याते रामे, दशरथो मुहुः—
"यदा यदा हि कौसल्या दासीवच्च, सखीव च ,
भार्यावद्, भगिनीवच् च, मातृवच् चोपतिष्ठति , ×
न मया सत्कृता देवी सत्काराहा, कृते तव" ;(वा०रा०)
एवं उच्चैः स्थितिः स्त्रीणां दृष्टा लोके महर्षिभिः ;
पति-अपत्य-व्रतानां च साध्वीनां मातृणां सदा ।
सद्विप्रः, सच् च राजन्यः, सती माता तथैव च ,
समाज-नीव्यां मनुना स्थापितास्तु विशेषतः ;
नीव्याः उपरि चैवास्याः चतुर्भौमा, चतुर्विधा ,
तथा षोड़षधा, चाथ बहुधा, वाऽप्यसंख्यधा ,
सुप्रतिष्ठापिता सर्वा शिष्टता सभ्यता सदा ।

समाज-माता तु सती, पिता सत्क्षत्रमुच्यते,
आचार्यः खलु सद्ब्रह्म, त्रिभिर्वै धार्यते जगत्।
माता पिता तथाऽऽचार्यः, एत एव त्रयोऽग्नयः;
अग्रणीर्नयनाद् अग्रे, स एवा'ऽग्निः' स्मृतो बुधैः,
पाचनाद्, दुष्टदहनाद्, अंधकारे प्रकाशनात्;
"अग्निर् मुखं (मुख्यः) च देवानां" परमात्मा-इति च श्रुतिः।

भारते विपरीतं तज् जातं सर्वं तु साम्प्रतं,
दुष्प्राप्यं किल सद्ब्रह्म, सत्क्षत्रं च न दृश्यते,
मातरो भृशमुद्विग्नाः शपन्ते 'हैन्दवं' कुलं।
(११) प्र० एतादृश्यां अवस्थायां योगक्षेमं कथं हि नः?
उ० संशप्तकाः कतिपये दृढं निश्चिनुयुर्यदि,
'कर्मणा वर्णतायाश्चापि, -आश्रमाणां तथैव च,
उद्धृत्यै, स्वैर् अपि प्राणैः, प्रयतिष्यामहे वयं',
प्रचारयेयुः सिद्धान्तान्, कुर्युः आचरणं तथा,
निमग्नस्योद्धृतिर्भूयस्तदा ऽवश्यं भविष्यति।
सदा परस्पराऽधीनाः सुसम्बद्धाः परस्परं,
परस्परोपकर्त्तारः, परस्परमुपाश्रिताः
सर्वथाऽन्योन्यतंत्राश्चाऽप्यनुरक्ताः परस्परं,
मुख-बाहू-रु-पद्वत्ते वर्णाः प्राप्स्यंति यौवनं,
शाश्वतो मानवो धर्मः, सर्वसंग्रहकारकः,
निर्मूर्च्छो निर्व्रणः स्वस्थो, भूयश्चोज्जागरिष्यति,
आप्यायितस्तपस्याभिः संज्ञां शक्तिं च लप्स्यते।
(१२) प्र० आचार्यः, च पिता, माता; शिक्षकाः, रक्षकाः, तथा
पोषकाश्च-इति त्रितयं; ब्राह्मणाः, क्षत्रियाः, विशः;—
एतस्मिंस्त्रितये को नु वरिष्ठः श्रेष्ठ एव च?
उ० न शक्यमेतन् निर्णेतुं, "कवयोऽप्यत्र मोहिताः";

एकं प्रशंसति-इदानी, तदानी अपरं पुनः,
न शक्नोति च निश्चेतुं, स्वयं हि भगवान् मनुः।
उक्तमेव हि पूर्वं यत् सर्वे तुल्य'गुणाः' 'द्वि-जाः'
परस्परानुबद्धाश्च, न स्वतंत्रस्तु कश्चन;
'एक-जाति'श्च 'बालो'ऽपि सर्वप्रियतमः कुले;
तदर्थमन्ये जीवन्ति; स हि तेषां 'प्रयोजनं';
स्वरूपलाभोऽप्यन्येषां विना तेन भवेन्नहि;
'आचारणीयो' बालो हि, बालेनैव हि 'मातृता',
'पितृता' चापि बालेन; विना तेन त्रयो नहि।
विचार एवाऽत्र मिथ्या तारतम्यस्य सर्वथा,
ईर्ष्या-मत्सरयोः कर्त्ता, तथा मानाऽपमानयोः;
ज्ञानिभिस्तु विशेषेण धार्यमेतत्सदा हृदि;
यतः सज्ज्ञान-सद्भावप्रचारस्तेषु चाश्रितः,
सज्ज्ञानाच् च सदिच्छा स्यात्, सदिच्छायाश्च सत्क्रिया।
नूनं सज्ज्ञानिचित्तं च, महामाया, महीयसी,
बलाद् 'आवृत्य' 'विक्षिप्य', महामोहाय यच्छति;(उ० स०)
"बलीयान् इन्द्रियग्रामो, विद्वांसं अपि कर्षति"; (म०)
"न धर्मशास्त्रं पठतीति शोधकं, न चापि वेदाध्ययनं, दुरात्मनः;
स्वभाव एवात्र तथाऽतिरिच्यते, यथा प्रकृत्या मधुरं गवां पयः"।
(हितो०)
तथापि सति सज्ज्ञाने सदिच्छायास्तु सम्भवः;
असज्ज्ञाने तु नैवास्ति संभवोऽपि मनागपि।
(क) एतेनैव हि भावेन भारो ऋषिभिः अर्पितः
"अधीति-बोध-आचरण-प्रचारणैः"
ज्ञानस्य शुद्धस्य तु संग्रहस्य,
विप्रेषु, धर्मशिक्षायाः, धर्मकृत्यस्य चैव हि,

सात्त्विक्याश्च तपस्यायाः; सर्वं तत्तु विवर्त्तितं ।
मिथ्याधर्मास्तु शिष्यन्ते, न प्रज्ञासम्मताः पुनः,
कृत्यानि चाऽनुष्ठीयंते दांभिकान्येव भूरिशः,
तपो रजस्तमोयुक्तः प्रायो बकबिडालवत्;
'आचाराः' शतशो भिन्नाः, ग्रामे ग्रामे, कुले कुले,
मूढग्राहाः, हेतुहीनाः, सर्वथा 'वेद'-वर्जिताः,
परस्परं विरुद्धाश्च, पोष्यंते कूटशिक्षकैः;
"चराणां अन्नं अचराः, दंष्ट्रिणां अपि-अदंष्ट्रिणः,
'बुधानां' 'अबुधाः' चैव, शूराणां चैव भीरवः"; (भा०)
सुखेनैव हि भोज्याः स्युः 'बुधानां' 'अबुधाः' इति,
प्रायः प्रसार्यंते 'मौर्ख्यं' कूटनीत्या-एतया 'बुधैः'।
"शास्त्रं ह्यबुद्ध्वा तत्त्वेन, केचिद्वादबलाज् जनाः,
कामद्वेषाऽभिभूतत्वाद् अहंकारवशं गताः,
याथातथ्यमविज्ञाय शास्त्राणां, शास्त्रदस्यवः,
'ब्रह्म'स्तेनाः, निरारम्भाः, अपक्वमनसो, ऽशिवाः, ×
तेषां तमःशरीराणां तम एव परायणं; ×
यो यथाप्रकृतिर्जन्तुः प्रकृतेः स्याद्वशानुगः,
तस्य द्वेषश्च कामश्च क्रोधो दम्भो ऽनृतं मदः,
नित्यमेवाऽनुवर्त्तन्ते गुणाः प्रकृतिसम्भवाः"।
( म० भा० शां० २७५ )
नेदृशाः 'ज्ञानदातारो' महर्षीणां तु सम्मताः।
"स्त्री-शूद्र-द्विजबन्धूनां न सुबोध्या श्रुतिः; ततः
भारत-व्यपदेशेन वेदार्थं उपदिष्टवान्;
सततं यतमानोऽयं महाकारुणिको मुनिः,
संसारिणां करुणयाऽऽह पुराणगुह्यं
अध्यात्मदीपं अतितितीर्षतां तमोऽन्धं";

"पठन् द्विजो वागृषभत्वं ईयात्,
स्यात् क्षत्रियो भूमिपतित्वं ईयात्,
वैश्यो जनः पण्यफलत्वमीयात्,
जनश्च शूद्रोपि महत्त्वमीयात्",
इति-उद्देश्येन-आदिकाव्यं वाल्मीकिः वत्सलो जगौ। (वा० रा०)

आदर्श-'ब्राह्मणं', नूनं, वेदव्यासो महामुनिः,
स्वयं तादृग्गुणः, ख्याति वाक्यै-वैराग्य-संभृतैः,
सर्वभूतदयापूर्णैः सर्वकल्याणकांक्षिभिः—
"येन पूर्णमिवाऽकाशं भवत्येकेन सर्वदा,
शून्यं येन जनाऽकीर्णं, तं देवाः ब्राह्मणं विदुः;
येन केनचिदाच्छन्नो, येन केनचिदाशितः,
यत्र क्वचन शायी च, तं देवा ब्राह्मणं विदुः;
अहेरिव गणाद् भीतः, सम्मानान्मरणादिव",
(मरणाच्च न भीतो यः), "तं देवा ब्राह्मणं विदुः;
न क्रुध्येन्, न प्रहृष्येच् च, मानितोऽमानितश्च यः,
सर्वभूतेष्वभयदः, तं देवा ब्राह्मणं विदुः;
विमुक्तं सर्वसंगेभ्यो, मुनिमाकाशवत् स्थितं,
अस्वं, एकचरं, शांतं, तं देवा ब्राह्मणं विदुः;
जीवितं यस्य धर्मार्थं, धर्मो हर्यर्थमेव च,
अहोरात्राश्च पुण्यार्थं, तं देवा ब्राह्मणं विदुः;
("एवं तु पंडितैर्ज्ञात्वा सर्व भूतमयं हरिं,
क्रियते सर्वभूतेपु भक्तिरव्यभिचारिणी"; (वि० पु०)
'हर्यर्थं' इत्यस्यार्थोऽतः 'सर्वार्थं' इति शिष्यते;)
निराशिषं अनारम्भं निर्नमस्कारं अस्तुतिं,
निर्मुक्तं वन्धनैः सर्वैः, तं देवा ब्राह्मणं विदुः;
अनुत्तरीयवसनं, अनुपस्तीर्णशायिनं,

बाहूपधानं, शाम्यन्तं, तं देवा ब्राह्मणं विदुः;
द्वन्द्वारामेषु सर्वेषु य एको रमते मुनिः,
परेषां अनवध्यायन्, तं देवा ब्राह्मणं विदुः;
येन सर्वं 'इदं' बुद्धं, प्रकृतिर्विकृतिश्च या,
गतिज्ञः सर्वभूतानां, तं देवा ब्राह्मणं विदुः;
अभयं सर्वभूतेभ्यः, सर्वेषां अभयं यतः,
सर्वभूतात्मभूतो यः, तं देवा ब्राह्मणं विदुः"
(म० भा० शां० अ० २५१, २७५)

"यदा भूतपृथग्भावं एकस्थं अनुपश्यति,
तत एव च विस्तारं 'ब्रह्म' सम्पद्यते तदा; ×
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च,
निर्ममो निरहंकारः समदुःखसुखः क्षमी, ×
यस्मान्नोद्विजते लोको, लोकान्नोद्विजते च यः,
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः"। (गी०)
इयं तु परमा काष्ठा, प्राप्याऽल्पैरेव मानवैः;
आदर्शमेतं चेद् गृह्णात्, ऋजुबुद्ध्या यतेत च,
"साधुरेव स मंतव्यः सम्यग् व्यवसितो हि सः"; (गी०)
सोऽयं एवंविधः शब्दः 'ब्राह्मणः' श्रैष्ठ्यसूचकः,
आच्छिद्यमानो यैः कैश्च, निरये पातितो ऽधुना।
बीभत्सरूपिणो भूरि, वीथ्यां वीथ्यां, पुरे पुरे,
'ब्राह्मणान्' स्वान् रटन्तश्च, पान्थोद्वेजनकारिणः,
भिक्षन्ते हि, क्वचिद् दीनाः, त्रासयन्तः स्त्रियः क्वचित्;
क्षत्र-विड्-वृत्तिभिश्चापि जीवन्तो बहवो नराः,
स्तब्धाः 'ब्राह्मण'-सम्मानं अपि भूयोऽनुयुञ्जते;
नामजात्याऽपि ये नैव ब्राह्मणाः, तेऽपि स्वाँस्तथा
बहवः ख्यापयंत्यद्य, 'जन्म-वर्णा'ऽदरेच्छया।

ब्राह्मण्याऽभिनिवेशश्च सात्त्विके तु न लभ्यते ;
राजसे तामसे भावे प्रायः एतर्हि दृश्यते ।
सद्ब्राह्मणाः शांतदांताः विद्वांसो विनयाऽन्विताः
भारते येऽवशिष्टाः, ते लज्ज्यंते ब्राह्मणब्रुवैः ।
"क्षात्राणि वैश्यानि च सेवमानः,
शौद्राणि कर्माणि च ब्राह्मणः सन्,
अस्मिन् लोके निन्दितो मन्दचेताः,
परे च लोके निरयं प्रयाति ; ×
यः स्याद्दान्तः सोमपाश्चार्यशीलः, सानुक्रोशः सर्वसहो निराशीः,
ऋजुर्मृदुरनृशंसः क्षमावान् स वै विप्रो; नेतरः पापकर्मा" । (शां०)
विविधाश्चाप्यनाचाराः 'ब्राह्मणानां' प्रदर्शिताः,
'तंत्रवार्त्तिक'कारेण, दक्षिणे चोत्तरे तथा ।
(ख) रक्षासारः क्षात्रधर्मः तथा व्यासेन कीर्त्तितः ;
विप्रधर्माद् अपि श्रेयान् सः इत्येतच् च सूचितं ;
"क्षत्रं वै ब्रह्मणो योनिः ; योनिः क्षत्रस्य ब्रह्म च; ×
यथा, राजन्, हस्तिपदे पदानि संलीयंते सर्वसत्त्वोद्भवानि,
एवं धर्मान् राजधर्मेषु सर्वान् सर्वावस्थान् संप्रलीनान् निबोध; ×
मज्जेत् त्रयी दंडनीतौ हतायां, सर्वे धर्माः प्रक्षयेयुर्विरुद्धाः,
सर्वे धर्माश्चाश्रमाणां हताः स्युः, क्षात्रे नष्टे राजधर्मे पुराणे ;
सर्वाः विद्याः राजधर्मेषु शिष्टाः, सर्वे योगाः राधर्मेषु दृष्टाः,
सर्वे धर्माः राजधर्मे प्रविष्टाः, धर्मो नाऽन्यो राजधर्माद् विशिष्टः ; ×
एवंवीर्यः सर्वधर्मोपपन्नः, क्षात्रः श्रेष्ठः सर्वधर्मेषु धर्मः,
पाल्यो युष्माभिर्लोकपालैरुदारैः; विपर्यये स्याद् अभवः प्रजानां; ×
नष्टाः धर्माः शतधा शाश्वतास्ते क्षात्रेण धर्मेण पुनः प्रवृद्धाः,
तस्माच्छ्रेष्ठाः राजधर्माः; न चान्ये; वीर्यश्रेष्ठा राजधर्माः मताः मे; ×
आत्मत्यागः, सर्वभूताऽनुकम्पा, लोकज्ञानं, पालनं, रक्षणं च,

विषण्णानां मोक्षणं पीडितानां, क्षात्रे धर्मे विद्यते पार्थिवानां ;
निर्मर्यादाः, काममन्युप्रवृत्ताः, भीताः राज्ञो नाऽधिगच्छन्ति पापं ;
शिष्टाश्चाऽन्ये सर्वधर्मोपपन्नाः साध्वाचाराः साधुधर्मं चरन्ति; ×
त्यागं श्रेष्ठं मुनयो वै वदन्ति; सर्वश्रेष्ठं यत् शरीरं त्यजंति ;
तत् तु व्यक्तं राजधर्मेषु; सर्वे प्रत्यक्षं ते भूमिपालाः यथैते" ।
(म०भा०शां)

एवं पितामहो भीष्मः प्रशशास युधिष्ठिरं ।
"यदि न प्रणयेद्राजा दंडं दंड्येष्वतंद्रितः ,
मत्स्याः इवाऽभक्षयिष्यन् दुर्बलान् बलवत्तराः ,
अद्यात् काकः पुरोडाशं श्वा च लिह्याद् हविस्तथा ,
स्वाम्यं च न स्यात् कस्मिंश्चित् , प्रवर्त्तेताऽधरोत्तरं; " (म०)
निग्रहः सर्वदुष्टानां, शिष्टानामपि संग्रहः ,
प्रग्रहश्चापि सर्वेषां, साधूनां चाऽप्यनुग्रहः ,
शांतिकं पौष्टिकं कर्म, क्षेमो योगस्तथैव च ,
सन्मंत्रियुक्तराजेन विना, भूमौ न सिध्यति ।
अराजके तु लोकेऽस्मिन्, स्यात् , तथा दुष्टराजके ,
सर्वत्रोपद्रवश्चैव, विप्लवश्चापि सर्वतः ;
सत्क्षत्रिये सन्नृपतौ लोककल्याणमाश्रितं ।
(ग) अन्यच्चापि तथैवाह कुरुवृद्धः पितामहः ,
'विप्रं, वैश्यं, राजपुत्रं च, राजन्, लोकाः सर्वे संश्रिताः धर्मकामाः; ×
'वार्त्ता' मूलो ह्ययं लोकः, तया वै 'धार्यते' सदा ; ×
वैश्यो हि धनधान्येन, त्रीन् वर्णान् बिभृयादिमान्" ; (म०भा०शां०)
वैश्याधीना च सा 'वार्त्ता', 'धारणाद्' 'धर्म'रूपिणी ;
वैश्यधर्मोऽपि तेनाऽयं हेतुनाऽस्ति वरः परः ।
एवं, यथा गुणाः तुल्याः त्रयः, वर्णास्त्रयस्तथा :
न कश्चिदधरश्चाथ न च कश्चिदथोत्तरः ;

वालः शूद्रः चतुर्थश्च सर्वसंग्रहकारकः,
यथोक्तं पूर्वं; अव्यक्तं यथैव त्रिगुणस्य च।

(१३) प्र० भोजने च विवाहे च परजातिविवर्जनं
यच् चिरात् भारते ऽभ्यस्तं, किं नु तत् सर्वथा वृथा?

उ० "यस्तर्केणाऽनुसंधत्ते स धर्मं वेद नेतरः", (म०)
इति सिद्धान्तं आलम्ब्य, प्रश्नोऽयं सुविचार्यतां;
जातिनाम्नोर् भेद एव, तादृशे हि विवर्जने,
पर्याप्यते न हि-इदानी हेतुत्वेन कथंचन;
मूढग्राहः, शौचदम्भः, पराद् विषभयं, तथा
भवेयुरीदृशाश्, चान्ये हेतवो व्याजसंवृताः;
न जातिनामभेदस्तु स्वतः पर्याप्तकारणं।
पर्याप्यन्ते न ते चाऽपि व्याजाः स्वोद्देश्यसिद्धये।
यज्जातीनां त्रिसाहस्रं वर्वर्ति-एतर्हि भारते,
तत्रै कोऽपि न सद्धेतुः कथंअपि-उपलभ्यते।
जातीनां वैमनस्यं यत्, प्रान्तीयानां च तत्तथा,
देशीयानां तथा, तद्वद् भिन्नधर्मावलम्बिनां;
'एषोऽहं', 'एष एवाऽहं', 'एतज्जातीयको ह्यहं',
'एतद्राष्ट्रीयः एवाहं', 'एतद्धर्मावलम्बी-अहं'—
घोराः अभिनिवेशास्ते, रागद्वेषैः परिप्लुताः,
'अस्मिता'-जनिताः सर्वे मानवान् भ्रामयंति वै,
परस्परं द्वेषयित्वा विनाशं प्रापयंत्यपि।
न भाले कस्यचिद् दृश्यं प्रकृत्या लिखितं किल—
क्षत्रियो, ब्राह्मणः, शूद्रो, म्लेच्छोऽयं, वैश्यः, एव वा,
श्रीवास्तवो, वा सक्सेना, गौडो वा, माथुरोऽथवा,
ग्वाला, चूडा, नमःशूद्रो, तीया, ढेढो, ऽथ पेरिया,
महेसरी, वा राठोरो, ऽग्रवालो वा, कनौजिया,

मद्रासी वा, ऽथ पंजाबी, बंगाली, गौर्जरोऽथवा,
हिन्दी, चीनी तु, जापानी, ईरानी, तुर्की-अरबोऽथवा,
जर्मनो, ब्रिटनो, रूसी, मेक्सिकन् वा, कनेडियन्,
सर्वे सर्वाः उद्वहंति, सर्वे सर्वत्र यांति च,
"सर्वे सर्वासु-अपत्यानि वर्णाः संजनयंति हि", (म० भा०)
अद्य हिन्दुर्, अथाऽन्येद्युर् मुस्लिमः, क्रिश्चनोऽथवा,
भवतीह स एवाऽयं; मुस्लिमश्चापि क्रिश्चनः;
तौ चैवार्यसमाजेन प्राप्येते हिन्दुतामपि;
देशीयत्वं, राष्ट्रियत्वं, अपि-एवं परिवर्त्यते
उपयुक्तैर् 'नैचुरालि-ज़ेशनैर्' विधिभिः; यथा
व्रात्यस्तोमादिविधिभिः भारतेऽपि पुराऽभवत्।
भिन्नानां विविधा ऽचाराः प्रान्तानां भारतस्य तु,
व्यासेन दर्शिता भूयो विवादे कर्णशल्ययोः;
अधिक्षिपद्भ्यां अन्योऽन्यं, यद्यप्युक्तं रुषा-एव हि,
तत्कालीना तथाऽप्येवं ज्ञेया सामाजिकी स्थितिः;
"अटता तु मया, देशान् नाना धर्मसमाकुलान्
आगच्छता, महाराज, वाह्लीकेषु निशामितं;
तत्र वै ब्राह्मणो भूत्वा, पुनर्भवति क्षत्रियः,
वैश्यः, शूद्रश्च, वाह्लीकः, ततो भवति नापितः,
नापितश्च ततो भूत्वा पुनर्भवति ब्राह्मणः,
द्विजो भूत्वा च तत्रैव पुनर्दासोऽभिजायते; ×
पंचनद्यो वहंत्येताः सिन्धुषष्ठास्तु यत्र, ते
आरट्टाः नाम वाह्लीकाः, एतेष्वार्यो हि नो वसेत्।
कुरवः सहपांचालाः, साल्वाः, मत्स्याः सनैमिशाः,
कोसलाः, काशि-पौण्ड्राश्च, कालिंगाः, मागधास्तथा,
चेदयश्च महाभागाः, धर्मं जानंति शाश्वतं"।

वेदेषु चोदाहरणं तादृशं दृश्यते, यथा,
"कारुरहं, ततो भिषक्, उपलप्रक्षिणी नना,
नानाधियो वसूयवोऽनुगा इव तस्थिम,
इन्द्रायेन्दो परिस्रव"। (ऋ० ९—११२—३)
सूच्यते त्वीदृशैः श्लोकैः, प्रान्ते पंचनदे, पुरा;
'वर्ण'स्तु 'जीविका-कर्म-वाची'-एवाऽभूच् च; नाऽन्यथा:
पर्यवर्त्तत 'वर्ण'स्तु जीविकापरिवर्त्तनात्।
यस्मिन् यस्मिन् जनपदे जीविका स्थिरतां अयात्,
प्रकृतेरानुकूल्याच्च, सुप्रबन्धान् नृपस्य च,
प्रावीण्यात् शिक्षकाणां च शिष्य-सद्वर्ण-निर्णये,
न तत्र हेतुर्वर्णस्य परिवर्त्ते तु तादृशः;
क्रमाच् च 'जन्मवर्णत्वं' आगोद् 'वंश-परम्परा';
पुराणैः सूच्यते यद्वत्, "कर्मभिः वर्णतां गतं"।
जाति-देश-राष्ट्र-धर्म-कृतानि कृत्रिमाणि तु
लक्षणानीदृशानीह व्यावर्त्तन्ते पुनः पुनः;
मनुष्यत्वं पुनस्त्वेकं स्थिरत्वेनाऽनुवर्त्तते;
तदेव भाले सर्वेषां प्रकृत्या लिखितं स्फुटं;
पादो-दर-भुजा-स्यानि, कर्ण-जिह्वा-क्षि-नासिकाः,
व्यक्तवाक्शक्तिरपि-एतत् सर्वेषां अस्ति सुस्फुटं।
'अहं हिन्दुर्', 'अहं मुस्लिम्', 'क्रिश्चनोऽहं', 'यहूदकः',
'तज्जातीयो' 'ऽन्यजातीयः'—इति कोऽयं महाभ्रमः?
'मानवोऽहं मनोर्जातः'—इत्येवाऽलं कथं नहि?
"जाति-रीति-कुल-गोत्र-दूरगं",
वेश-गीर्-वसन-भेदवर्जितं,
"देश-काल-विषया-ऽतिवर्त्ति यन्"
'मानवत्वं' इह भावयाऽत्मनि।

"सर्वेषामेव भावानां सामान्यं वृद्धिकारणं ;
ह्रासहेतुर्विशेषस्तु; प्रवृत्तिरुभयस्य च" ; (चरक०)
'सामान्ये' बलं आधेयं 'मनुष्यत्वे' विशेषतः ,
न तु 'जाति'-'विशेषेषु' संघ-व्याघात-कारिषु ;
सामान्ये 'धारणा' कार्या, 'चित्तबन्धस्;' तदा-एव वै ,
विनिवर्त्तिष्यते 'ह्रासः', 'विशेषैः' हिन्दुनां कृतः ,
आकेशान्तं चाऽनखाग्रं समाजः संस्करिष्यते ।
प्रवृत्तिस्तु 'विशेषाणां' अपि-अस्त्येव, न संशयः ;
गौणाः एव हि ते सन्तु; सामान्यं मुख्यमेव च ।
प्रयोगः प्रस्तुते प्रश्ने सिद्धान्तानां अथ-ईदृशः—
शीलव्यसनसाम्येन विवाहो ऽस्तु च, भोजनं ;
निरामिषाणां सदृशैः; सामिषाणां च सामिषैः
सुरापाणां सुरापैश्च; हिंसकानां च हिंसकैः ;
सात्त्विकानां सात्त्विकैश्च; राजसानां च राजसैः ;
तामसानां तामसैश्च; प्रकृतीनां तु साम्यतः ।
शूकराऽदाः वराहाऽदैः, गोभक्षाः वृषभाऽदनैः ,
महिषैर्योजिनश्चापि तथा महिषमर्दनैः ,
शौलगवाः शौलगवैः, अजाभक्षाः अजाऽशिभिः ,
आखेटकाः मृगयुभिः; दुग्धपाः क्षीरपैरपि ,
गोधूमतंडुलभुजः यवमुद्गचणाशनैः ,
कंदमूलफलाऽहाराः कंदमूलफलाऽदनैः ;
सिंहव्याघ्राश्च क्रव्यादाः क्रव्याद्वृकतरक्षुभिः ;
तृणाऽशाः हस्तिनः खड्गाः महिषाः ऋषभास्तथा
तादृशैः करिभिः गंडैः लुलापैर् वृषभैरपि ;
शैवाः, शाक्ताः, वैष्णवाश्च, शैवैः, शाक्तैश्च, वैष्णवैः ;
सह -आहारविहारेषु विवाहेषु चरन्तु वै ,

परस्परं रमन्तां च, मोदन्तां स्वत एव च ;
नैसर्गिको विधिरयं, सर्वथा चाऽप्यकृत्रिमः,
शीलव्यसनसाम्येन प्रकृत्यैव नियोजितः।
पशूनां 'जातयो' भिन्नाः यद्, रूपेणैव तत् तथा ;
न पुनर्मानवेष्वेवं जातिभेदः स्वरूपतः ;
कृत्रिमैरेव वेशैः स्वान् भेदयंति-एव ते मृषा।
पुराणी-इयं प्रथा—वेश-भेदाः 'कर्म'-विभेदने ;
सा तु "कर्म-विवेकार्थं" इदानीमपि पाल्यते ,
'कान्स्टेब्लस्या' ऽपरो वेशो, सैनिकस्यापि चाऽपरः ,
'जज्जस्य' च, 'वकीलस्य', 'कुर्जिमानस्य' चा ऽन्यथा ;
शय्यायै त्वपरं वस्त्रं, अश्वारोहाय चाऽपरं ,
मार्जन्याश्च प्रयोगाय वस्त्रमन्यद् अपेक्षितं ;
देश-काल-निमित्तानां विशेषैः, विविधाः प्रथाः ,
अभूवन् पूर्वकाले याः, सर्वाः ताः नाऽधुना हिताः ;
"ततः शकान्, सयवनान्, काम्बोजान्, पारदाँस्तथा ,
पह्लवाँश्चैव निःशेषान् कर्त्तुं व्यवसितस्तदा ;
ते वध्यमानाः वीरेण सगरेण महात्मना ,
वसिष्ठं शरणं गत्वा प्रणिपेतुः मनीषिणं ; ×
सगरः स्वां प्रतिज्ञां च गुरोर्वाक्यं निशम्य च ,
'धर्मं' जघान तेषां वै, 'वेशा'ऽन्यत्वं चकार ह ;
अर्धं शकानां शिरसो मुण्डं कृत्वा व्यसर्जयद् ,
यवनानां शिरः सर्वं, काम्बोजानां तथैव च ,
पारदाः मुक्तकेशाश्च, पह्लवाः श्मश्रुधारिणः ,
निस्स्वाध्यायवषट्काराः कृतास्तेन महात्मना ; ×
सर्वे ते क्षत्रियाः, तात; धर्मस्तेषां निराकृतः ,
वसिष्ठवचनाद्, राजन्, वेशाश्च, सगरेण हि"। (हरिवं० अ०१४)

न याताऽयातसौकर्यं पुराऽसीत्, साम्प्रतं यथा,
न 'रेल्वे', वायुयानानि, वहित्राणि-अब्धिगानि च,
'लारी', 'बस्', 'मोटरादीनि', नाऽनिशं च गताऽगतं,
कोटिशोऽपि मनुष्याणां 'चातुर्मास्ये' ऽपि संततं;
'देवनिद्रोत्थिर्ति' चापि, 'शुक्रास्तोदय'मेव च,
न मत्वा, 'हिन्दव'श्चापि प्रयांत्यद्य तु कोटिशः।
दस्युभिः किल मार्गेषु रूद्धेषु प्रायशः पुरा,
परस्परसहायार्थं 'सार्थ'वज्-'जाति'-निर्मितिः,
'समुत्थितानां सम्भूय', 'श्रेणीवन्,' 'निगमादिवत्';
प्रधानहेतुः सर्वत्र 'कर्म'-सामान्यमेव हि;
एकस्मिंश्च कुले 'जाता', जीवंतश्चैकजीविकां,
परस्परं संहताश्चाऽपि, एकजातित्वमागताः,
पुराकाले; तदद्यत्वे सर्वं हि परिवर्त्तितं;
ततो नवीना कार्याऽस्ति समाजस्य व्यवस्थितिः।
"आयुःसत्त्वबलाऽरोग्यसुखप्रीतिविवर्धनाः,
रस्याः, स्निग्धाः, स्थिराः, हृद्याः, आहाराः सात्त्विकप्रियाः;
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः,
आहाराः राजसस्येष्टाः दुःखशोकामयप्रदाः;
यातयामं गतरसं पूति पर्युषितं च यद्
उच्छिष्टमपि चामेध्यं, भोजनं तामसप्रियं"; (गी०)
भोजने ऽतः, विवाहे च, परा शुद्धिरभीप्सिता;
दुष्टान्नाद् व्याधयो भूरि जायन्तेऽपि-आधयस्तथा,
पापानि च निकृष्टानि दुर्बुद्धिजनितानि हि,
शुद्धान्नात्तु स्वदेहस्य, शुद्धोद्वाहाच्च च सन्ततेः,
स्वास्थ्यं, च परमोत्कर्षः, प्रत्यक्षं किल दृश्यते;
जातिनाम्नोः समत्वेन किंतु नैतदवाप्यते।

संचारिरोगाक्रान्तानां 'सजातीनां' तु हस्ततः
दृश्यते गृह्यमाणं हि भोज्यं; नाऽन्यकरात् तथा,
स्वस्थस्यापि शुचेश्च,-अन्य'जाते'र्नाम तु बिभ्रतः।
एवमेव विवाहेषु वैषम्यं दृश्यते बहु;
कृष्णो वरो वधूः श्वेता, वरो गौरो ऽसिता वधूः,
कुरूपोऽयं सुरूपा-इयं, कान्तोऽयं विकटा त्वियं,
कराला-इयं मृदुश्चाऽयं, विपरीतं तथैव च,
बहुशो हिन्दुनां लोके, 'जाति'-नाम्नि समे द्वयोः।
"उन्मादो मातृदोषेण, पितृदोषेण मूर्खता",
गाथेयं प्रथिता लोके, विवाहे दोषसूचिका।
"ब्राह्मादिषु विवाहेषु चतुर्ष्वेवाऽनुपूर्वशः;
ब्रह्मवर्चस्विनः पुत्राः जायंते शिष्टसंमताः,
रूपसत्त्वगुणोपेताः, धनवन्तो, यशस्विनः,
पर्याप्तभोगाः धर्मिष्ठाः, जीवन्ति च शतं समाः;
इतरेषु तु (अ-) शिष्टेषु, नृशंसाऽनृतवादिनः,
जायंते दुर्विवाहेषु, ब्रह्म-धर्म-द्विषः सुताः"; (म०)
'ब्रह्म'-द्विषस्तु निर्विद्याः, पापिनो 'धर्म'-घातकाः,
'मूर्खा'श्चापि, तथो'न्माद'रोगादिभिरुपद्रुताः।
वरवध्वोरानुगुण्यं यत्र निश्चीयते ध्रुवं,
विना छलं, विना लोभं, विना 'जात्या'ग्रहं तथा,
'सह-धर्म-चरौ स्यातां' इत्युद्देश्येन केवलं,
तत्रैव सद्विवाहोऽस्ति, सत्यं 'सावर्ण्य'मेव च।
कामस्य भार्याः तिस्रस्तु सात्त्विक्यः सात्त्विकस्य वै,
प्रीतिः स्नेहमयी, गाढा रतिः, शुद्धा च सन्ततिः।
"परस्परानुकूल्येन तदेवं लज्जमानयोः,
संवत्सरशतेनापि प्रीतिर्न परिहीयते";(वा० कामसू०)

"एतत्कामफलं लोके यद् द्वयोरेकचित्तता ;
अन्यचित्तकृते कामे, शवयोरिव संगमः" । (भर्तृहरि०)
ताभ्यामेव तु लभ्याः स्युः 'ब्रह्मवर्चस्विनः' सुताः
ब्रह्मचारिव्रतं याभ्यां अच्युतं प्रतिपालितं ;
ब्रह्मचारी युवा यत्र, कन्या च ब्रह्मचारिणी ।
"अविप्लुतब्रह्मचर्यः युवा गार्हस्थ्यं आविशेत्", (म०)
कन्या चादूषिता सत्या प्रयता ब्रह्मचारिणी ;
ब्रह्मचर्येऽवकीर्णानां शुद्ध्यै तु विहिताः व्रताः ;
कन्यायाः दूषकस्यापि दंडस्तीक्ष्णो विधीयते ।
"वेश्या नाम महावह्निः, रूपेन्धनसमुज्ज्वला,
कामिभिर्यत्र हूयन्ते यौवनानि धनानि च",
इति श्लोकः प्रसिद्धोऽस्ति; तस्मात्सत्यतरो ह्यसौ—
'विटो नाम महाव्याघ्रः शाठ्यदंष्ट्रानखैर्युतः,
योऽबलाः खादति क्रूरः, वेपंतीर् हरिणीरिव' ।
ब्रह्मचर्यव्रताऽयत्तं ज्ञानं, शौर्यं, धनं, बलं ;
वर्चस्, तेजो, महो, रंहो, ब्रह्मचर्ये प्रतिष्ठितं ।
बालानां, युवकन्यानां, दूषणेन विपत्तयः,
घोराः, मानवजातेस्तु-उत्पद्यंते जीवने भृशं ।
"अविज्ञातासु च स्त्रीषु, क्लीबासु, स्वैरिणीषु च,
परभार्यासु, कन्यासु, नाऽचरेन् मैथुनं नरः ;
कुलेषु पापरक्षांसि जायंते वर्णसंकरात्,
अपुमांसो, ऽङ्गहीनाश्च, स्थूलजिह्वाः, विचेतसः ;
एते चाऽन्ये च जायंते यदा राजा प्रमाद्यति ;
तस्माद् राज्ञा विशेषेण वर्त्तितव्यं प्रजाहिते" । (म०भा०शां०९०)
नवधा कथ्यते भक्तिः, दशधा चाऽपि मैथुनं ;
अष्टाङ्गः प्रोच्यते योगः, तथाऽष्टांगं च मैथुनं ;

आसनान्यपि चत्वारि चाशीतिश्चापि मैथुने,
योगे च तावन्ति-उच्यन्ते; फलं तु विपरीयते;
योगात्संप्राप्यते मोक्षो, मैथुनाद् घोरबंधनं;
योगात्कूटस्थता नित्या, मैथुनात्संसृतिर्भृशं;
स्वे महिम्नि स्थितिर्योगात्, पराऽनुसरणं रतात्;
योगात् "स्वरूपेऽवस्थानं", पररूपे तु मैथुनात्;
"सर्वं परवशं दुःखं, सर्वं आत्मवशं सुखं",
लभ्याऽऽत्मवशता योगात्, पारवश्यं तु मैथुनात्;
एकस्मादात्मनो लाभः, परस्मादात्मविस्मृतिः;
एकस्तु पाशुपत्याय, पशुत्वायैव चाऽपरः।
तथाप्यस्ति 'स्व-भावो'ऽयं, 'प्रकृतिः', 'परमात्मनः,
विहाय पाशुपत्यं यत् 'पशुत्वं' याति-अविद्यया;
ततश्च 'धीर'-'वीरत्वं', दिव्यत्वं' च पुनः, क्रमात्।
धिया-ईरयेद् इंद्रियाणि, धियं चाऽध्याऽऽत्मबोधतः,
परेभ्यश्च धियं रायेत्, स 'धीर' इति कथ्यते।
'वीन्' अश्वान् ईरयेद् यस्तु, तथैव स्वेन्द्रियाण्यपि,
धृतिगृहीतया बुद्ध्या, निगृह्णन् प्रग्रहैरिव,
वीरत्वाय हितं 'वीर्यं' यश्च रक्षेत् प्रयत्नतः,
कामं क्रोधं च दमयन्, स हि 'वीर' इतीर्यते;
'अश्वान्' किल-इंद्रियाण्याहुः, यतस्ते विषयान् प्रति
मनो ह्याशु-वहंत्येव, विषयांश्च मनः प्रति;
'अश्वास्तिष्ठंति' यस्मिन् स नाडीव्यूहः कलेवरे,
ऊर्ध्वमूलो ह्यधःशाखो रहस्ये 'ऽश्वत्थः' उच्यते।
मध्यायां 'वीरधीरायां' अवस्थायां, बुधैः, ननु,
प्रकृत्यैवास्ति संसेव्यः पूर्वमभ्युदयः; ततः,
निःश्रेयसं मार्गितव्यं 'दिव्यं'; पातोऽन्यथा भवेत्;

कामश्चाभ्युदयस्यांगं; धर्म्यो वैवाहिकस्ततः,
राधनीयस्सात्त्विकश्च; न तु राजस-तामसः;
"धर्माऽविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ"। (गी०)
यथाऽदिष्टं भगवता मनुना सर्ववेदिना—
सात्त्विकप्रेमनिस्स्यन्दाः, धार्मिकाः, ज्ञानिनो, बुधाः,
दया'मैत्री'पराः, स्वस्थाः, सुमुखाः, सुस्मिताः, प्रजाः
जायंते सद्विवाहात्तु सर्वदा 'वीरधीर'योः;
अन्ये पाशव-कन्दर्पोच्चाराः, दर्पभयातुराः,
क्रोधिनः, कर्कशाः, क्रूराः, कामिनः, कूटभाषिणः,
स्नेहहीनाः, अविश्वास्याः, सर्वेषां अपि 'शत्रवः';
"अन्तःशाक्ताः, बहिःशैवाः, सभामध्ये च वैष्णवाः,
नानारूपधराः कौलाः विचरंति महीतले"।
"मित्रं मिन्देर्नन्दतेः, प्रीयतेर्वा, संत्रायतेर्मिनुतेर्मोदतेर्वा;
शत्रुः शदेः, शासतेर्वा, श्यतेर्वा, शृणातेर्वा, श्वसतेः, सीदतेर्वा,
श्रमेः, शुचो, बहुशः सूदतेश्च",—(म० भा० कर्ण० ३६)
निरुक्तिरेवं मित्र-शत्र्वोः स्मृतास्ति।
"विपदि धैर्य-अथाभ्युदये क्षमा, सदसि वाक्पटुता, युधि विक्रमः,
यशसि चाभिरुचिर्, व्यसनं श्रुतौ, प्रकृतिसिद्धमिदं हि महात्मनां;
अकरुणत्वं, अकारणविग्रहः, परधने परयोषिति च स्पृहा,
स्वजनबन्धुजनेष्वसहिष्णुता, प्रकृतिसिद्धमिदं हि दुरात्मनां";
जातिः उत्कर्षं आप्नोति या भवेद् ब्रह्मचारिणी;
क्षयं नाशं ध्रुवं दुष्टा जातिर्या व्यभिचारिणी।
यथेष्टापत्यलाभाय, मनुना, उपनिषत्सु च,
वैज्ञानिकाः उपायाश्च सच्छिक्षार्थं निरूपिताः।
सद्विवाहात् महात्मानो, दुरात्मानो विरुद्धतः,
जायंते; दर्शितं ह्येतत् पुराणेषु पुनः पुनः,

नायकानां प्रधानानां कथाभिः किल जन्मनां ।
तावत्यः एव तु-उत्पाद्याः प्रजाः, पालयितुं हि याः
सुखेन सम्यक् शक्याः स्युः, पितृभ्यां; नाऽधिकाः ततः ;
अन्यथा बहुदुःखानां अनन्तैव परम्परा,
पितृणां, तदपत्यानां, समाजस्याऽखिलस्य च,
चिन्ता, क्षुत्क्षामता, रोगाः, दौर्बल्यं, कलहाः सदा,
आमिषार्थे शुनां यद्वद्, अन्योऽन्यस्यापि भक्षणं ;
कोटिशो जायमानास्तु, नदीषु जलधौ तथा,
भक्षयंति यथा मत्स्याः दुर्बलान् बलवत्तराः ।
कामः एव जगत्स्रष्टा, मात्रयाऽनन्ददायकः ;
मात्रां अतीतो ऽशनवत्, विषमं वाऽपि सेवितः,
कारणं घोरकष्टानां, धर्माऽपेतः, स एव हि ।
अतः कामो निरोद्धव्यः, संसेव्यश्चापि मात्रया,
वैवाहिकेन विधिना, गार्हस्थ्ये चापि संस्कृते,
विज्ञानसृष्टधर्मानुसारेणैव च सर्वदा ।
'कामे' नियमिते, सर्वं अन्यन् नियमितं भवेत् ।
तत्र-आद्यो 'रस-कामः' तु मूलकामः स्मृतो बुधैः ।
'रसना' ऽतो नियम्याऽऽदौ, "जितं सर्वं जिते रसे" ; (भा०)
महाभारतयुद्धस्य कारणं मुख्यं अस्ति, यद्
"आपूर्यत मही कृत्स्ना प्राणिभिर्बहुभिर्भृशं,
असुरा जज्ञिरे क्षेत्रे राज्ञां च बलदर्पिताः,
राज्ञां बलैर्बलवतां खिन्ना भूः भृशपीडिता,
पुरे पुरे च नृपतिः कोटिसंख्यैर्बलैर्वृतः,
राष्ट्रे राष्ट्रे च शतशो ग्रामाः कुलसहस्रिणः ;
ग्रामायुतैः पुरैः राष्ट्रैः, भूमिः, निर्विवरीकृता",
(म० भा० आ० ६५, स० ५१),

यथौ भाराऽवताराय, 'ब्रह्माणं' हृदि संस्थितं ;
'रुद्रः', क्रोधः, तदा जातः, कामस्याऽनुजः एव यः ।
साम्प्रतं चापि घोराणि प्रवृत्तानि पुनः पुनः
युद्धानि यानि सर्वत्र, तत्र-एतद् ह्येव कारणं,
अतिसंख्या मनुष्याणां, पापिनां-ईशिता तथा ।
भारतेऽप्यति बाहुल्यं नृसंख्यायाः असंशयं,
दिवसे दिवसे चापि वर्धते तदभीक्ष्णशः ;
तथाऽन्नवस्त्रसामग्री हीयते चाऽनुपाततः :
नाऽन्नानि चोत्पादयति पूर्ववत्, सेविताऽपि, भूः ;
अतिकर्षणाद्, उर्वराऽपि, यत्र तत्रोषरायते ;
गृध्नुभिः कर्षकैः, 'भू-पैः', संछिन्नानि वनान्यपि,
ग्राम्याश्चतुष्पदः चापि बहुशो हि विनाशिताः,
मनुना-'उपपातकत्वेन' कर्माणि गणितानि वै
यानि, 'विज्ञान'दृष्ट्या च बह्वापत्तिकराणि हि,
तानि क्रियंते बहुशः, लोभाच् चाऽदूरदर्शिभिः ;
'विज्ञान'रहितैर्विप्रैः, पुस्तकाक्षरलम्भिभिः,
स-हेतु धर्माः नोच्यंते; विपत्तिस्ततः आगता ।
विवाहादपि भोज्येषु शौचाऽधिक्यमपेक्षितं ;
भोज्याधीना यतः शुद्धिर् विवाह्योस्तु शरीरयोः ;
न पुन'र्जाति'-नाम्नैव तत् शौचं उपलभ्यते ।
"सर्वज्ञानमयो वेदः, सर्ववेदमयो मनुः" ;
आहारशुद्धेर्महिमा, वेदेन, मनुना तथा,
शब्दैर् बहुगभीरार्थैः पुनः पुनः उदाहृतः,
"उपस्पृश्य द्विजो नित्यं अन्नं अद्यात् समाहितः,
भुक्त्वा चोपस्पृशेत् सम्यग्, अद्भिः खानि च संस्पृशेत् ;
पूजयेद् अशनं नित्यं, अद्याच्च चैतद् अकुत्सयन्,

दृष्ट्वा हृष्येत्, प्रसीदेच्च, प्रतिनन्देच्च सर्वशः ;
पूजितं ह्यशनं नित्यं बलं ऊर्जं च यच्छति ;
अपूजितं तु तद् भुक्तं उभयं नाशयेद् इदं ;
नोच्छिष्टं कस्यचिद् दद्यात्, नाऽद्यात् चैव तथाऽन्तरा ;
न चैवाऽत्यशनं कुर्यात्, न चोच्छिष्टः कचिद् व्रजेत् ;
अनारोग्यं, अनायुष्यं, अस्वर्ग्यं, चातिभोजनं ;
अपुण्यं, लोक-विद्विष्टं, तस्मात् तत् परिवर्जयेत्" । (म०)
"सत्वं अन्न-जनितो जन-देहः" ;
"यदन्नः पुरुषो भवति, तदन्नास्तस्य देवताः" ; (वा० रा०)
दुष्टान्नाद् दुष्टभावाः स्युः, पापानि, नरकं ततः,
प्रसिद्धा भोजनाऽशुद्धेरेषा ऽनर्थपरम्परा ;
सुरापानान्महाऽघानि प्रत्यक्षं प्रभवंति हि ।
"पानं, अक्षाः, स्त्रियश्चैव, मृगया च यथाक्रमं ;
एतत् कष्टतमं विद्यात् चतुष्कं कामजे गणे" ; (म०)
"ॐ अन्नपते, अन्नस्य नो धेहि, अनमीवस्य शुष्मिणः ;
प्र प्रदातारं तारिष, ऊर्जं नो धेहि द्विपदे चतुष्पदे" ; (वे०)
"अन्ने सर्वमिदं स्थितं; अन्नमयं हि, सोम्य, मनः, प्राणश्च ;
अन्नं ब्रह्म; ओषधीभ्योऽन्नं, अन्नात् पुरुषः ;
अन्नं हि भूतानां ज्येष्ठं; अन्नाद् भूतानि जायन्ते,
जातान्यन्नेन वर्धंते; स वा एष पुरुषोऽन्नरसमयः" ; (उ०)
"अन्नाद् भवंति भूतानि, पर्जन्यादन्नसम्भवः" (गी०)
"आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः ;
स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः तस्मै
मृदितकषायाय तमसस्पारं दर्शयति
भगवान् सनत्कुमारः, तं स्कन्द इत्याचक्षते" । (छां०उ०)
आहारशुद्धेरेतावान् महिमा-उक्तो महर्षिभिः ;

न त्वन्य'जाति'-अस्पर्शेन प्रोक्तं यत् सा तु सिध्यति।
'शूद्राः' एव हि सूदास्तु द्विजानां अभवन् पुरा,
पाचनायाऽन्नपानानां, भोजने, परिवेशने,
द्विजाऽतिथीनां सत्कारे, राज-श्रेष्ठि-आदि-वेश्मसु,
इत्येतद् इतिहासाभ्यां वर्ण्यते तु पुनः पुनः।
"आर्धिकः, कुलमित्रं च, गोपालो, दासनापितौ,
एते शूद्रेषु भोज्यान्नाः, यश्चात्मानं समर्पयेत्"; (म०)
"अथाऽपरस्यां दिशि भीमदर्शनो
वृकोदरोऽदृश्यत सिंहविक्रमः,
असिप्रवेके प्रतिमुच्य शाणिते, खजां च, दर्वीं च, करेण धारयन्;
त्वचं च गोचर्ममयीं सुमर्दितां, समुक्षितां पानक-राग-षाडवैः,
किलासमालम्ब्य करेण चायसं लश्रृंगिवेरार्द्रकभूस्तृणांकुरं; ×
ततो विराटं नृपमाह पाण्डवस्, ×
त्वां, शत्रुहन्, जीवितुमागतोऽस्मि ×
नरेन्द्र, 'शूद्रो'ऽस्मि, 'चतुर्थवर्णभाक्', गुरूपदेशात्परिचारकर्मकृत्,
जानामि सूपांश्च, रसांश्च संस्कृतान्,
मांसानि,-अपूपांश्च पचामि शोभनान्,
रागप्रकारांश्च बहून्फलाश्रयान्; महानसे मे न समोऽस्ति सूपकृत्; ×
'चतुर्थवर्णो'ऽस्मि—अहमुग्रशासन,
न वै वृणे त्वां पदं अन्यथा-इदृशं;
जात्यास्मि 'शूद्रो' बललेति नाम्ना, जिजीविषुः त्वद्विषयं समागतः;
युधिष्ठिरस्यास्मि महानसे पुरा बभूव सर्वप्रभुर्अन्नपानदः; ×
तमेवं उक्ते वचने नराधिपः, प्रत्यब्रवीन्मत्स्यपतिः प्रहृष्टवत्, ×
यथैव कामस्तव तत्तथा कृतं, महानसे त्वं भव मे पुरस्कृतः"। (म०भा०)
इत्युदाहरणैः स्पष्टा याऽसीद् अत्र प्रथा पुरा।
निष्कर्षस्त्वत्र—'शौचं' हि, भोजनोद्वाहयोः, परं,

ईप्सितं, किंतु तन्नैव 'जाति'-नाम्नैव साध्यते ;
शीलव्यसनसाम्येन साधनीयं हि तत् सदा।
(१४) प्र० "सहयज्ञाः प्रजाः सृष्ट्वा पुरा-उवाच प्रजापतिः,
अनेन प्रसविष्यध्वं, एष वोऽस्त्विष्टकामधुक्", ( गी० )
इति प्रसिद्धः श्लोकोऽयं; 'यज्ञ' शब्दश्च भूरिशः,
संस्कृत-'ब्रह्मणि' दृश्यः ; कोऽर्थो, हेतुश्च, तत्र, कः ?
उ० विषयेऽस्मिन् पूर्वं उक्तं; तथापि पुनरुच्यते।
द्वंद्वात्मिका हि प्रकृतिः ; अतो ऽन्योऽन्यं उपाश्रितौ
द्वंद्विनौ दृढसम्बद्धौ, पृथक्कार्यौ न कर्हिचित् ;
प्रभवत्येकः एकस्मिन् काले,ऽन्यस्मिंस्तथाऽपरः ;
स्वार्थस्य हृदि पारार्थ्यं; तस्य स्वार्थत्वमेव च ;
चक्रनेमिक्रमेण-एतौ भ्रमतः खलु-अहर्निशं।
'अहं स्यां बहुधा'-इत्येषा पूर्वं स्वार्था-एव च-एषणा ;
दम्पत्योः कामः आदौ तु 'स्वार्थः' एव, न संशयः ;
अपत्येच्छा पुनस्तत्र 'परार्था', लीयते हृदि ;
न पालनं अपत्यानां, पित्रोः आत्म-'बलिं' विना ;
'यज्ञस्य' च प्रधानाङ्गं श्रूयते 'बलिर्' एव च ;
आत्मनो बलिदानं च स्वस्य, वेदैस्तु सम्मतः
सत्यो बलिः, परार्थाय स्वार्थत्यागो हि यो भवेत् ;
न स्वार्थाय परेषां तु जीवानां हिंसनं बलिः ;
अतो हि 'यज्ञपुरुषो' 'विष्णुः', यल् लोकभूतये
स्वधाम्नोऽवतरन् भूयः, आत्मानं कुरुते 'बलिं'।
"बीजैर्यज्ञेषु यष्टव्यं इति वै वैदिकी श्रुतिः ;
अजसंज्ञानि बीजानि; छागं नो हन्तुमर्हथ ;
नैष धर्मः सतामस्ति यत्र बध्येत वै पशुः ;"
ऋषीणां निर्णयो ह्येषः शान्तिपर्वणि वर्णितः। (अ० ३४५)

विध्वंसितः श्रुतेरर्थो धूर्त्तैर्मांसाऽशलोलुपैः।
अर्थो गुह्यतरोऽतोपि कृष्णेन विशदीकृतः,
"यज्ञानां जपयज्ञोस्मि", (गी०) "जपश्चैवार्थभावनं", (यो० सू०)
"सर्वेषामेव दानानां 'ब्रह्म'(ज्ञान)दानं विशिष्यते"; (म०)
माता पिता तथाऽऽचार्यः प्राणं ज्ञानं ददत्यपि;
पालनं रक्षणं शिक्षा, महायज्ञाः, दिने दिने;
विना स्वार्थपरित्यागाद् अंशात्, प्रजननं नहि;
"यं मातापितरौ क्लेशं सहेते सम्भवे नृणां,
न तस्याऽपचितिः शक्या कर्त्तुं वर्षशतैरपि"; (म०)
"यः आवृणोति, अवितथेन ब्रह्मणा,
शिष्यस्य श्रोत्रं, अमृतं संप्रयच्छन्,
तं जानीयात् पितरं मातरं च,
तं न द्रुह्येत् कतमच्चनास", (निरुक्त०)
ज्ञानं तस्मै न देयं, यो द्रोहशीलो भवेद्, अतः;
दैत्यो लब्ध्वा वरं धातुः, देवानेव हि बाधते।
मनुनोक्ताः 'महा-यज्ञाः' पूर्वमेवात्र वर्णिताः;
'परार्थबुद्धिः' 'यज्ञस्य' तत्त्व इत्यवशिष्यते;
स्वयं सह-एव 'यज्ञेन' जज्ञानाऽपि प्रजापतिः;
सहैव चाऽपि 'यज्ञेन' प्रजाः सर्वाः ससर्ज सः;
विना 'परार्थ-भावेन' प्रसूतिर् न प्रवर्धते;
'परार्थभावः' एवाऽस्ति प्रजाभ्यः सर्व-'काम'-धुक्;
परस्परस्य साहाय्यात्, स्वार्थत्यागात् तथा-अंशतः,
धर्म्यः 'कामः' समर्यादः सर्वः सर्वैरवाप्यते।
पानात् पाता, 'पति'श्चा,ऽपि 'पिता'; मानाच्च 'मातृ' ता,
गर्भस्य परिमाणं यन् मीयते मातृ-शक्तिभिः;
प्रजातानां प्रजानां हि जननात् पालनात् तथा;

सर्वो वंशकरोऽस्त्येव 'प्रजापति'-अभिधानभाक् ।
'यज्ञो' नाम, 'परार्थाय', 'महाजन'-हिताय च
विशेषेण हि, यत् किंचित् क्रियते कर्म, तस्य वै ।
विना च स्वार्थहानेन, परार्थं नहि सिध्यति;
परार्थे साधिते भूयः स्वार्थं चैव-अपि सिध्यति;
आत्मस्वार्थं वलिं कुर्वन् यजमानस्तु सद्यजिः;
स्वार्थत्यागं विना पित्रोर्, नाऽपत्यानां तु संभवः,
प्रजापतित्व-पितृत्व-मातृत्वानां च नैव वा;
परस्परार्थं स्वार्थानां त्यागेन तु विना-अंशतः,
न वर्धनं मनुष्याणां, समाजस्थितिरेव वा;
"प्रसविष्यध्वं-एतेनैव,अयमेव हि कामधुक्" ।
'स्वार्थत्यागः परार्थाय'—नूनं भावोऽयमेव हि
'यज्ञस्य' तात्त्विकं रूपं, धार्मिकं, मार्मिकं तथा ।
अत एव श्रुतिः ख्याति, "देवाः वलिं अकल्पयन्
प्रजापतिं"; विना तस्य बलिदानेन, संभवः
'देवानां' नैव; तिष्ठेत् सः "स्वे महिम्नि"-एव सर्वदा ।
कृष्णोऽप्यनुवदन्नर्थं इमं एव जगौ गिरां,
"प्रजापतिः ससर्जादौ सहयज्ञाः प्रजाः इमाः" ।
यद्वै लोकार्थं उत्सृष्टं, धर्मशालाश्च, वाटिकाः,
तीर्थाऽवताराः, कूपाश्च, मंदिराणि, सरांसि च,
पांथविश्रामशालाश्च, तथा वै सूतिकागृहाः,
विद्यापीठाः, पाठशालाः, चिकित्सानां तथाऽलयाः,
पन्थानो,रथमार्गाश्च, पशु-पक्षि-नर-प्रपाः,
छायिनां फलिनां चापि वृक्षाणां श्रेणयः पथि,
अग्रहाराश्च, सत्त्राणि, भिक्षागेहाः, सदाव्रताः,
'आपूर्त्तं' सर्वं एव-एतद् 'यज्ञस्या'न्तर्गतं ननु ।

"एवं बहुविधाः यज्ञाः वितताः ब्रह्मणो (वेदस्य) मुखे,
कर्मजान् विद्धि तान् सर्वान्, एवं ज्ञात्वा विमोक्ष्यसे।
द्रव्ययज्ञाः, तपोयज्ञाः, योगयज्ञास्तथाऽपरे,
स्वाध्यायज्ञानयज्ञाश्च, यतयः संशितव्रताः।
श्रेयान् द्रव्यमयाद् यज्ञाज् ज्ञानयज्ञः, परंतप,
सर्वं कर्म-अखिलं, पार्थ, ज्ञाने परिसमाप्यते; × (गी०)
यज्ञायाऽऽचरतः कर्म (निष्कर्मणि) विलीयते"। (गी०)
'निवृत्तं' एव 'निष्कर्म' क्रियते ज्ञानिना यतः।
किंतु लोकार्थमुत्सृष्टं, सज्जनैर्यत् परार्थिभिः,
परमार्थिभिरेवाऽपि, स्वार्थाय व्यंस्यते तु तत्
विनियुक्तैः प्रबन्धाय रक्षि-देवलक-आदिभिः।
यद् वस्तु सर्वसत्ताकं, कोषो राष्ट्रीयको यथा,
एकसत्ताकमेवैतत् कुर्यात् कोऽपि छलेन चेत्,
यथा सर्वहितं न्यासं निधिपः स्तेनयेत् स्वयं,
तथा धर्मत्र-देवत्र-सत्राणां अत्र दुर्गतिः।
"देवाः अकुर्वन् यद्, दैत्याः अविध्यन् पाप्मना तु तत्"; (उ०)
एवं द्वंद्वमयं युद्धं शाश्वतं पुण्यपापयोः;
विवेकेन सदा कार्यं ज्ञानिना दूरदर्शिना।
'यज्ञे' संति-अपरेऽप्यर्थाः रहस्याः; आधिदैविकाः
शक्तयस्तैस्तु लभ्यन्ते ऋषिभिः, योगसिद्धयः;
"तृतीयं यज्ञदीक्षायां" भवेज् जन्म-इति हि श्रुतिः;
कामः क्रोधो भयं दर्पः तथाऽहं-भाव एव च,
अज-सैरिभ-गो-ऽश्व-नृ-नामभिस्तत्र सूचिताः,
तत्तन्मेधेषु-अथ एतेषां बलिदानं क्रियेत चेन्,
मानसानां विकाराणां, चित्तसंस्करणं भवेद्
उत्तमं; सुकराः सर्वाः भवेयुः सिद्धयः तदा।

काम्येभ्यः किंतु यज्ञेभ्यः 'महा'-यज्ञाः वराः, तरां,
दैनिकाः पंच, इत्येतन् 'महा'-शब्देन सूच्यते।
(१५) प्र० "न तत् परस्य कुर्वीत यत् स्याद् अप्रियमात्मनः ;
यद्यद् आत्मार्थं 'इच्छेच्' च' तत्परस्यापि चिंतयेत्"—
इत्युक्तं 'धर्मसर्वस्वं' ; तत् कस्माद् अवशिष्यते
वर्णाश्रमाणां धर्माणां विस्तीर्णानां प्रयोजनं ?
उ० यथा बीजं हि 'सर्वस्वं' वटस्य महतोऽपि च,
तथैवात्मैक्यसिद्धान्तो बीजं धर्मद्रुमस्य वै ;
सूत्रभूतं परं त्वेतद् व्याख्यां स्तीर्णां अपेक्षते,
विकासिताऽवबोधाय; बीजं विटपितां यथा ;
धर्म-'मर्मैव' तत्सूत्रं, समग्रं न पुनर् वपुः।
स्वदते शर्करा-एकस्मै, अन्यस्मै मरिचं तथा ;
न मिष्टं एव सर्वेभ्यो देयं, न च तथा कटु।
यद् एकस्मै प्रियं, तत् तु न सर्वेभ्यः प्रियं भवेत् ;
एकस्यैवापि कालेन रुचिर्भूयो विभिद्यते ;
"क्रमेलकं निन्दति कोमलेच्छुः, क्रमेलकः कटकलम्पटस्तं",
प्रत्यक्षमेतत्तु पदे पदेऽस्ति यथा भृशं "भिन्नरुचिर्हिलोकः" ;
न सर्वथा भिन्नरुचिस्तथापि; सामान्यं अप्यस्ति विशेषितेषु।
देश-काल-निमित्तानां, 'इच्छा'-पात्रा-धिकारिणां,
स्वभाव-शक्ति-अवस्थानां भेदैर्धर्मो विभिद्यते।
धर्मबीज-स्कंध-शाखा-प्रशाखा-पल्लवादिवद्
भेदाः एते; संग्रहाय सर्वेषां तु, विवेकतः
समन्वयायाऽपि, कृतं वर्णाश्रम-निबंधनं ; ०
एतेन 'धर्म-सर्वस्व'-प्रयोगो नाऽनृतो भवेत्
विविधव्यवहारेषु, भिन्नेष्ववसरेषु च।
"सकल्पः सरहस्यश्च वेदोऽध्येयो द्विजन्मना" ; (म०)

'रहस्यं' औपनिषदं अध्यात्मज्ञानं उच्यते ;
'कल्पः' तस्य प्रयोगोऽस्ति मुख्ये धर्मस्य कर्मणि ,
वर्णाश्रमाणां धर्मश्च धर्मो मुख्यतया स्मृतः ,
यतो धर्माः तु सर्वेऽस्मिन् अन्तर्भूताः हि-अशेषतः ,
महायज्ञाश्च यज्ञाश्चाप्येतदर्थं हि कल्पिताः ।

(१६)प्र० वेदस्य च-इतिहास्य सम्बन्धः कथं ईदृशः ?

उ० असंख्याः शक्तयः, तृष्णाः, इच्छाः, ऊर्मयः, आशयाः,
अविद्याः, वासनाः, मोहाः, काम-क्रोधादिवृत्तयः ;
तथा ज्ञानान्यनंतानि, विद्याः, प्रज्ञाः, प्रकाशिकाः
राग-द्वेषादितमसां, अज्ञानांध्यविनाशिकाः ;
तथा सर्वाणि 'कर्माणि' 'निष्कर्माणि'-अपि; नित्यदा
अव्यक्तत्वेन लीयन्ते ऽव्यक्ते हि परमात्मनि ,
सर्वेषामेव जीवानां चिद्रूपेण हृदि स्थिते ;
अव्यक्तानां तु सर्वेषां व्यंजनं जगदेव हि ;
इतिहासपुराणं च जगतां एव वर्णनं ;
विना व्यक्तिं च न-अव्यक्तं वोद्धुं शक्येत कर्हिचित् ;
यथा सूत्रं, विना भाष्यं, विशदं तु न वुध्यते ;
यथा च नियमः कश्चिद् विना-उदाहरणैरपि ।
सृष्टेर्विधीनां मूलानां, नियतीनां परात्मनः ,
वेदेन 'सूत्र'वत्शब्दैः क्रियते प्रतिपादनं ;
इतिहासैस्तु तद्भाष्यं वहूदाहरणैरिति ;
"परोपकारः पुण्याय, पापाय परपीड़नं ;
पापाद् दुःखं, सुखं पुण्याद्"—श्रुत्या-उक्तो नियमस्त्वयं ;
जीववृत्तैर्विना किंतु न वुद्धिमधिरोहति ।
सर्वे वेदान्तसिद्धान्ताः, इतिवृत्तैस्तुमानवैः ,
शोधितैः तत्प्रयोगेण, साफल्यं यान्ति; नाऽन्यथा ।

(१७) प्र० 'अपौरुषेयाः वेदाः' इति-अस्ति 'हिन्दुषु' डिंडिमः ;
तत् किं सत्यं असत्यं वा; 'वेद'-शब्दः किमर्थकः ?
उ० अर्थौ विशेष-सामान्यौ वेद-शब्दस्य तु स्मृतौ ;
(१) एकः सांकेतिकः तत्र, (२) निरुक्त्या यौगिकोऽपरः;
(१) संहितानां चतुष्कं च, (२) सर्वं सज्ज्ञानमेव च ;
अन्तर्गतो विशेषार्थः सामान्यार्थे च सर्वथा ।
'विद्यते' इति 'विद्या' स्याद्, 'वेदनाद्' 'वेदः' उच्यते ।
महाभारतकारेण ख्यातं तत् शांतिपर्वणि ;
"अङ्गानि, वेदाः चत्वारो, मीमांसा, न्यायविस्तरः,
पुराणं धर्मशास्त्रं च, विद्या ह्येताः चतुर्दश ;
आयुर्वेदो, धनुर्वेदो, गान्धर्वश्चेति ते त्रयः,
अर्थशास्त्रं (शिल्पवेदः) चतुर्थं तु, विद्याः ह्यष्टादशैव तु ;
एतासामेव विद्यानां व्यासमाह महेश्वरः,
शतानि त्रीणि शास्त्राणां, महातंत्राणि सप्तति ;
नानार्थानि च शास्त्राणि ततः सर्वाणि शंकरः
प्रोवाच भगवान् देवः; कलाज्ञानानि यानि च
चतुःषष्टिप्रमाणानि, आयुर्वेदं च सोत्तरं,
अष्टादश-विकल्पां-ऽतां दंडनीतिं च शाश्वती,
गान्धर्वं, इतिहासं च, नानाविस्तरमुक्तवान्—
इत्येताः शंकरप्रोक्ताः 'विद्याः' शब्दार्थसंहिताः ;
पुनर्भेदसहस्रं तु तासामेव तु विस्तरः
ऋषिभिर्देवगंधर्वैः सविकल्पः कृतश्च; तत्
शश्वद् अभ्यस्यते लोके; 'वेदः' एव तु सर्वशः ।
'वेदाः' चतस्रः (चत्वारः) संक्षिप्ताः; वेदवादा'श्च (विस्तरः) ते स्मृताः;
एतासां (एतेषां) पारगो यस्तु स चोक्तो 'वेदपारगः' ।"
(म० भा० शां० अ० १२२)

अर्थाद् 'विद्या' च वेदश्चेत्यनर्थान्तरमेव हि।
चतस्रः 'संहिताः' 'वेदाः' संकेतेन, विशेपतः;
रहस्यार्थमयत्वाच्च, दुर्वेद्यत्वात् तथैव च,
तासां तु 'वेदः' इत्येपः प्रायः संकेतः उत्थितः।
"यावनार्थः 'उदपाने' सर्वतः संप्लुतोदके
तावान् सर्वेपु वेदेपु ब्राह्मणस्य विजानतः", (गी०)
इति श्लोकस्य गीतायाः अर्थौ द्वौ सम्भाविष्यतः—
(१) आत्मज्ञस्य न किंचित्तु वेदेभ्यो लभ्यमस्ति वै,
गंगायां प्लवमानस्य कूपेभ्यः किं प्रयोजनं?
आध्यात्मिके निष्णातस्याऽप्यात्मतृप्तस्य सर्वदा,
आत्मारामाऽत्मकामस्य, निष्कामस्यापि सर्वतः,
तथा प्रतीक्षमाणस्य शरीरात् स्वाद् विमोक्षणं,
"नाभिनन्देत मरणं, नाऽभिनन्देत जीवितं,
कालमेव प्रतीक्षेत, निर्देशं भृतको यथा", (म०)
"नाऽनवाप्तं अवाप्तव्यं" वेदेभ्यो हीदृशस्य वै।
(२) 'उदकानां' अगाधानां निधिर्यद्वन् महा-'उदधिः',
वेदः पूर्णो महार्थानां, तद्रहस्यस्य वेदिनः,
अधिभूता-धिदेवादि-ज्ञानानां महतामपि।
ज्ञानेभ्यस्तादृशेभ्यस्तु सर्वदाऽस्ति प्रयोजनं
ईशितॄणां, महर्षीणां, जगत्कार्येऽधिकारिणां।
समीक्ष्य च परीक्षार्थं, उद्ध्रियन्तेऽत्र केचन
श्लोकाः; संशयिताः शब्दाः प्रयुज्यंते प्रमातृभिः
आप्तैर्येपु; भवेद् एवं संप्रधार्य अर्थनिश्चितिः।
"न स्विदेतेऽप्युच्छिष्टाः इति, न वा अजीविष्यं इमान् अखादन्,
इति होवाच, कामो म 'उदपानं' इति"; (छां० उ०, १-१०-४)
"कामः, इच्छातः, मे मम 'उदकपानं' लभ्यते, इत्यर्थः"; (शां०भा०)

"अदृश्यत महाकूपस्तृणवीरुत्समावृतः,
खमावृत्यो 'दपान'स्य कृकलासः स्थितो महान्" ;
(म० भा० अनु० १०५)
"अथापश्यदृषीन् सर्वान् अंगुष्ठोदरवर्ष्मणः,
क्लिश्यमानान् मन्दबलान् गोष्पदे 'संप्लुतोदके'" ; (म०भा०आ०३१)
"यथो'दपाने' महति (?ऽमहति) सर्वतः 'संप्लुतोदके',
एवं सर्वेषु वेदेषु आत्मानमनुजानतः" ; (सनत्सु० गी०)
"यथा वप्रे वेगवति, सर्वतः 'संप्लुतोदके',
नित्यं विचरणाद् बाधः, तथा राज्यं प्रमाद्यतः" ;
(म० भा० शां० १०३)
'महत्तत्त्वं', 'बुद्धितत्त्वं', जगद्व्यापि तु यत् सदा,
तदेव "विष्णुर्जिष्णुश्च ब्रह्मा शम्भुश्च शंकरः",
इति पौराणिकैर्वाक्यैः पूर्वमेव प्रदर्शितं ;
तस्य प्रेरणयैवात्र 'विद्याः' प्रादुर्भवंति वै
हृदयेभ्यो मनुष्याणां, ऋषीणां, विदुषामपि ;
सन्ति चाऽपी'श्वरी'भूताः जीवाः 'विष्णवादि'-नामकाः,
महान्तश्च महात्मानो महैश्वर्यैश्च संयुताः,
परात्मनोऽनन्तसृष्टौ अधिकारिपदं गताः,
ब्रह्मांडानां नियन्तारो, मानवानां यथा नृपाः ;
यथोक्तं ब्रह्मसूत्रेषु, देवी-भागवतादिषु
पुराणेष्वपि; ते चापि बुधान् आविश्य कुर्वते
शास्त्राणि आविः, मनुष्याणां शिक्षायै हितकाम्यया ;
"तानि अभिद्रुत्य दैत्यैश्चाप्याविध्यन्ते हि पाप्मना", (उ०)
अहिताय प्रयुज्यन्ते हितस्थाने, च भूरिशः ;
यथा वेदास्तु अहिंसार्थाः हिंसायै व्यंसिताः अपि ।
'अपौरुषेय'-वादश्च 'रोचनार्थो' हि केवलं,

वक्तुं चापि तथा-एतेषां उत्कृष्टत्वं, अपेक्षया।
'अपौरुषेयः' पुरुषः स्वयमेव यदा, तदा
सर्वमेवाऽपौरुषेयं, यत् किंचिज् जगतीगतं।
परमात्मा स्वयं चैव 'परमः पुरुषः' स्मृतः;
महाभूतानि सर्वाणि, गुणास्तेषां तथैव च
शब्दस्पर्शादयः सर्वे, प्राकृता वैकृतास्तथा,
सामान्याश्च विशेषाश्च, सर्वे 'ब्रह्म'-कृता इति;
सर्वे ऽपि 'पुरुषाः' 'तस्य' काष्ठपुत्तलिका इव;
तेनैव निर्मिताः सर्वे; 'ऽमीषां' निर्मितयः तु याः
संसृतौ प्रतिभासंते, ताश्च 'तस्यैव' मूलतः।
मानवं वाङ्मयं सर्वं, स-वेदं, सार्वभाषिकं,
'अपौरुषेय'मेवाऽतः; 'पौरुषेय'मथा ऽपि वा,
यतो हि संहिता-मंत्राः अपि 'दृष्टाः' महर्षिभिः।
नैको भावो, विचारो वा, ऽप्युपास्तिर् वा-उद्यमोऽपि वा,
नाऽसंख्यजीवचित्तेषु न-उदितो यः पुनः पुनः;
न च शब्दो, ध्वनिर्वापि, यो न स्यात् सार्वकालिकः;
अनन्ते चिन्मये ऽगाधे सर्वानुभवसागरे,
त्रैकालिकाः अनुभवाः सर्वे सन्त्येव सर्वदा;
"श्रद्धत्स्व, अननुभूतोऽर्थो न मनः स्प्रष्टुमर्हति;
स सर्वधीवृत्त्यनुभूतसर्वः"; (भा०)
"बिभर्त्ति सर्व-नाम-रूप-कर्माणि ब्रह्म एव हि"; (उ०)
"अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः;
कर्मजानि शरीराणि, शरीराकृतयस्तथा;
महाभूतानि नित्यानि भूताधिपति-संश्रयात्;
तेषां च नित्यसंवासो, न विनाशो वियुज्यतां";
(म० भा० आश्रमवासिक पर्व ३६)

अचलोऽधिपतिः स्थाणुः सर्वगश्च सनातनः, (गी०)
नित्यानि, आविस्-तिरो-भावैर्, भूतान्यपि च सर्वदा।
'कूटस्थ'-नित्यता-एकस्मिन्, अपरेषु 'प्रवाहिणी'।
सति-एवं, 'पौरुषेयं' किं वक्तुं शक्येत तत्त्वतः?
प्रत्येकस्यापि कार्यस्य कारणं किंचिद् इष्यते;
तत्कारणं स्वयं कार्यं भवत्यन्यस्य कस्यचित्
कारणस्यः एवं अस्तीयं अनन्तैव परम्परा,
कार्याणां कारणानां च, मितान्येव तु यानि वै।
अमितं कारणं त्वेकं, निदानं, ह्यादिकारणं,
सार्वत्रिकं, सार्वदिकं, सर्वकारणकारणं,
सर्वव्यापि, सदाव्यापि, सर्वेषां प्रेरकं परं:
'अपौरुषेयं' तच्चास्ति, 'सार्वपौरुषं' एव वा:
'परमः पुरुषः' सोऽयं, 'सर्वेऽपि पुरुषाः' स वै;
कार्यं तस्यैव सर्वं, यत् किंचिद् भवति कुत्रचित्:
'अपौरुषेयं' इति वा, "पौरुषेयं" इतीव वा,
सर्वं हि शक्यते वक्तुं, जगदन्तर्गतं तु यत्।
प्रसंगतः इदं वाच्यं—'कवौ' 'तस्मिन्' 'परे' सति,
सर्वज्ञे सर्वधीवृत्तौ, केषांचिद् शब्दपाठिनां
कोऽयं 'मौलिकता'-गर्वः, को'ऽपूर्वत्व'-भ्रमो महान्?!
यत् किंचिदपि सच्छास्त्रं, सज्ज्ञानप्रतिपादकं,
'विद्या'-ऽविष्करणं नूनं तत्सर्वं परमात्मनः:
तथा'ऽविद्या'ऽपि, तस्यैवाऽसज्ज्ञानेषु-आविर्भाऽयते।
ज्ञान-विज्ञान-शास्त्रेषु यत्तथ्यं प्रतिपादितं,
'पौरुषेयं' न केनाऽपि वक्तुं तदिह शक्यते:
आर्षैस्तु पुरुषैः, काले काले, तत् तत्त्वदर्शिभिः
'दृष्ट'मेव, तथैवाऽन्यैः, 'श्रुतं', 'सूक्तं', 'स्मृतं', तथा:

न 'कृतं' खलु केनापि, नाऽदौ केनापि 'निर्मितं'।
बह्वर्थं च, महार्थं च, यच्च विस्मयकारकं,
बहूनामपरिचितं, 'प्राकृताऽतीतं' एव च
'लोकोत्तरं' तदेव-इह-'अपौरुषेयं' इतीर्यते;
संकेतार्थं प्रवृत्तोऽयं शब्दो, न खलु तत्त्वतः।
द्वौ द्वौ मिलित्वा, चत्वारः; शतं च, दशधा दश;
लौहाश्मनां घट्टनाच्च, वंशानां घर्षणात्तथा,
गृहेषूत्पाद्यते वह्निः, दावाग्निर्जायते वने;
दुग्धपानाद् भवेत् पुष्टिः, विषपानान् मृतिस्तथा;
इतीदृशानि तथ्यानि 'पौरुषेयाणि' सन्ति किं?
"नाऽमन्त्रमक्षरं किंचिन्, न च द्रव्यमनौषधं",
मंत्रत्वं औषधत्वं चा'ऽपौरुषेयं' द्वयं खलु।
विधातृ-विहितान्येव तादृक् तथ्यान्यशेषतः।
प्रकृतेः नियमाः सर्वेऽपौरुषेयास्तु सुस्फुटं;
तेषां च वर्णनं शब्दैस्तादृशं हि भविष्यति।
अनन्तं हि जगद् यस्माद्, अनन्तं तस्य 'वेदनं';
"वेदाः अनन्ताः" इत्येवं वेदेषूक्तं स्वयं ततः।
(१८) प्र० लभ्येषु धर्मग्रन्थेषु, 'जन्म-वर्ण'-समर्थकाः
श्लोकास्तु बहवः संति; स्वल्पाः 'वर्णस्य कर्मणा';
न मान्यं 'जन्मपक्षीयं' ऋषीणां किं अतो मतं?
उ० "नवधाऽऽथर्वणो वेदः, बाहृच्यं चैकविंशतिः,
सहस्राध्वा सामवेदः, यजुरेकशताध्वकं";
सर्वमेतद्विगलितं, किंचिदेवावशिष्यते।
"ब्रह्मा ऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजं,
यत्र धर्मः, तथैवार्थः, कामश्चैवाऽनुवर्णितः,
चतुर्थो मोक्ष इत्येव पृथगर्थः पृथग्गुणः;

युगानामायुषो ह्रासं विज्ञाय, भगवान् शिवः",
दशाऽध्यायसहस्रैस्तन् महच्छास्त्रं समक्षिपत्;
सहस्रैः पंचभिश्चापि संचिक्षेप पुरंदरः;
बृहस्पतिस्त्रिसाहस्रैः; सहस्रेणैव च-उशनाः" । (म०भा० शां०५८)
तदध्यायसहस्रं च प्रति-एव-उशनसं गतं;
मर्त्यलोके न कुत्रापि केन चाप्युपलभ्यते ।
'वृद्धो मनुः' श्रूयते च, लभ्यते न तु साम्प्रतं ।
इतिहासपुराणं च "शतकोटिप्रविस्तरं"
आदिकाले ऽभवच् चेति श्रूयते; न तु लभ्यते ।
आयुः-काम-अर्थ-शास्त्राणां ग्रन्थाः प्राप्यास्तु ये ऽधुना,
आदौ तेषां तु सर्वेषां कथ्यते चेदृशी कथा;
कोटिशो विस्तरस्त्वासीत्, युगह्रासात्तु ह्रस्वता ।
एतेषामर्थवादानां अर्थः एकस्त्वयं हि, यत्,
शीलस्य भारतीयानां ह्रासाद् विद्याऽपि-अजिह्रसत् ।
भूयांसो लोपिताः ग्रन्थाः आर्षाः, स्वल्पाः तु शेषिताः;
अनार्षाश्चाऽनुदात्ताश्च नवीनाः लिखिताः बहु,
शील-शक्ति-बुद्धि-विद्या-औदार्य-सादा-ऽनुरूपिणः ।
स्वल्पान्येव हि रत्नानि, लोष्टकुड्यं तु भूरिशः;
प्रकृतेर्नियमो ह्येष; किमाश्चर्यमतो, यदि
अल्पाः लभ्याः 'कर्म-वर्ण'-श्लोकाः, बहु तथेतरे?
अन्यदत्र विचार्यं च; सर्वं द्वंद्वमयं जगत्;
प्रत्येकविषये तस्मात्, पक्षौ द्वौ सम्भविष्यतः;
प्रतिप्रश्नस्योत्तरे द्वे भवतो हि तथैव च;
अत्यन्तं पक्षपातेन पक्षस्यैकस्य, तत्र वै,
भ्रश्यति व्यवहारश्च, विवादाः प्रभवंति च;
अत एव हि निर्णीतं प्राज्ञैः सर्वार्थदर्शिभिः,

"आश्रयेन्मध्यमां वृत्तिं, अति सर्वत्र वर्जयेत्" ;
"अतिवादाँस्तितिक्षेत, नावमन्येत कंचन" ; (म०)
"आत्मक्रीडः, आत्मरतिः, क्रियावान्,
विजानन् विद्वान् भवते नाऽतिवादी" ; (उ०)
"उभय(–'अति'–)कोटि-स्पर्शिनी प्रकृतिः,
पुरुषः मध्यस्थः"; ( भावप्रकाशः )
"यस्मिन् विरुद्धगतयो ह्यनिशं पतंति,
आनन्दमात्रमविकारमहं प्रपद्ये :
तस्मै समुन्नद्धविरुद्धशक्तये नमः परस्मै पुरुषाय वेधसे" ; (भा०)
"तदेजति, तन्नैजति, तद् दूरे, तद्ध अन्तिके,
तदन्तरस्य सर्वस्य, तदु सर्वस्यास्य बाह्यतः ;
अणोरणीयान् महतो महीयान्
आत्माऽस्य जन्तोर्निहितो गुहायां,
तं अक्रतुः पश्यति वीतशोको
धातुः प्रसादान् महिमानमात्मनः ;
'एतं संयद्वाम इत्याचक्षते, एतं सर्वाणि वामानि अभिसंविशंति";(उ०)
एको, नाना; ऋतं, माया; विद्या, ऽविद्या; शमो, श्रमः ;
सामान्यं च, विशेषश्च; दैवं, पौरुषमेव च ;
तथ्यं, मिथ्या च; सद्, असन्; निद्रा, जागरणं तथा ;
अहर्, निशा; श्रमः, क्रीडा; कामो, नैष्काम्यमेव च ;
प्रवृत्तिश्च, निवृत्तिश्च; कर्म, निष्कर्म वै तथा ;
"द्विविधं श्रूयते वाक्यं, कुरु कर्म, त्यजेति च",
"कर्मणैव हि संसिद्धिः", "विद्ययाऽमृतमश्नुते",
"नियतं कुरु कर्म त्वं", "ज्ञानवान् मां प्रपद्यते",
"ज्ञानयोगेन सांख्यानां, कर्मयोगेन योगिनां" ;
प्रकृतिर्, विकृतिश्चैव; प्राधान्यं, गौण्यं एव च ;—

द्वंद्वान्यसंख्यानीदृशि दृश्यन्ते जीवने सदा;
द्वंद्विभ्यासुभयाभ्यां च कार्यमस्ति नृणां मुहुः;
द्वाभ्यामेव हि चक्राभ्यां रथस्य स्याद् यथा गतिः,
एवमेव समाजस्य व्यवस्थायां अपेक्षिते
'मुख्य'–'गौण'–स्वरूपेणाऽप्युभये, 'कर्म'–'जन्मनी'।
वारं वारं पूर्वमुक्तं, 'कर्म' 'जन्माऽनुसारि' चेद्,
अवश्यमेव 'वर्णत्वं' भवेज्जन्माऽनुसारि च;
नो चेद् एवं, तदा तु स्यात् 'कर्मणैव हि वर्णता'।
बाधकैः सर्वदा-उत्सर्गाः अपवादैर् अनुद्रुताः;
उभये ऽपि भवेयुस्ते मान्याः, हेतुविशेषतः;
परेण नियमेनैव नियमो बाध्यते ऽपरः,
इत्ययं चाऽपि नियमः प्रकृतेरेव दृश्यते।
आचाराणां तथा भेदाः दृश्यंते तु सहस्रशः,
हिन्दूनां' वै प्रतिपदं, त्रिसहस्रासु जातिषु;
यद्येषां वर्णनं कुर्यात् कोऽपि, ग्रन्थो महान् भवेत्।
प्रत्यक्षमपि सति-एवं, मूढ़ग्राहो दृढो महान्,
'शुद्धो ममैव ह्याचारः, पवित्रश्चाहमेव वै'।
अवस्था-भेदतो द्वंद्वी, प्रतिद्वंद्वी ततः परं,
प्रभूतत्वं अवाप्नोति, चक्रनेमिक्रमेण हि।
प्रकृतेर्विकृतिश्चैव; विकृतेश्चापि संस्कृतिः;
संस्कृतेश्चापि विकृतिः; सर्वासां प्रकृतौ लयः;
चक्राऽवर्त्तिनि संसारे भवत्येव पुनः पुनः।
एवमेवैककाले तु, बलीयो 'जन्म' वै भवेद्;
अपरस्मिंस्तथा काले, बलीयः 'कर्म' एव हि।
प्रतिष्ठितार्यमर्यादे समाजे, सुव्यवस्थिते,
कुलेषु एकैक-धर्मेषु प्रवृत्तेषु-अव्यतिक्रमं,

स्वभाव-गुण-धर्माणां 'जन्म' हेतुर्भविष्यति ।
मर्यादासु विनष्टासु, प्रवृत्ते वृत्ति-संकरे,
ब्रह्मचर्ये च विध्वस्ते, व्यभिचारे च विस्तृते,
(मोक्षधर्मे भरद्वाजो व्याजहार यथा भृगुं,
"सर्वेषां खलु वर्णानां दृश्यते वर्णसंकरः" ; म० भा० शां०)
लुप्ते कृत्याऽधिकाराणां विभागे, धर्म-कर्मणां,
श्रमाणां च तदर्थाणां, जीविकानां तथैव च,
वैशिष्ट्यानां साधनानां—'कर्म' निर्णायकं किल,
संस्काराय समाजस्य, व्यवस्थायै पुनस्तथा ।
अयं ननु महान् दोषः जन्म-वर्णाग्रहे ध्रुवं,
'जन्मनैवाऽहमुच्चोऽसि, नीचस्त्वं चैव जन्मना',
'त्वद्‌गृहे त्वं पवित्रः स्याः, पवित्रोऽहं तु मद्‌गृहे',
'यथा श्रेष्ठः पवित्रोऽहं तथा नैवाऽन्यजातयः',
इति भावाः भवंत्यस्माच्, चतुर्दिग्द्वेषकारिणः ।
नैकोऽप्यणुः शरीरेऽस्मिन्, 'शीर्यमाणे' पदे पदे,
योऽसंख्य-कोटि-योनीषु भ्रान्तो न-उच्चावचेषु वै,
शौकरीष्वपि, कार्मीषु, दैवीष्वपि, पुनः पुनः ;
सर्वाण्यपि शरीराणि पंचभूतमयानि हि,
पंचभ्य एव जायंते, पुनर्यांति च पंचतां ।
प्रत्यक्षः प्रत्यहं चैष परीवर्त्तोऽन्न-'खाद्य'योः ;
विष्ठा-ओषधीनां 'खाद्यं' च,-अपि-अन्नं ओषधयो नृणां ;
("ओषध्यः फलपाकांताः", गोधूमचणकादयः ; म०)
"स्थानाद्बीजादुपष्टम्भात् निस्स्यन्दात् निधनादपि,
कायं आधेय-शौचत्वात्, पंडिताः ह्यशुचिं विदुः" ; (यो० सू० भा०)
"अस्थि-स्थूणं, स्नायु-युतं, मांसशोणितलेपनं,
चर्मावनद्धं, दुर्गन्धि, पूर्णं मूत्र-पुरीषयोः,

जराशोकसमाविष्टं, रोगायतनमातुरं,
रजस्वलं अनित्यं च" शरीरं मानवं सदा ; (म०)
एतादृश्यां अवस्थायां, देहानां, जगतस्तथा,
'अहमेव पवित्रो,ऽहं अस्पृश्योऽस्पृश्यजातिभिः,
शुद्धोऽभिजनवानस्मि'—कोऽयमेष मदभ्रमः ?

(१९) प्र० तर्हि शब्दौ किं एतौ तु, 'शुद्धो-ऽशुद्धो', निरर्थकौ,
'अपवित्रः-पवित्रश्च' अपि, 'अशुचिः-शुचिर्' एव च ?

उ० मैवं; सदैव साऽपेक्षौ किंतु, नैकान्तिकौ हि, तौ।
नहि अविद्धा ऽशुचितया, शुचिता त्वस्ति कुत्रचित् ;
मलं स्थितं सदा नूनं अपि द्विजतमोदरे ;
अतो नैवाऽभिमन्तव्यं, गर्वितव्यं, न कर्हिचित्,
नाऽन्यः कश्चित् तिरस्कार्यो, नाऽहंकार्यं स्वयं तथा,
न दम्भनीयं कुत्राऽपि—'जन्मनैव शुचिस्त्वहं'।
"अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनं" ; (म०)
उपदेश्यो मलाऽच्छन्नः स्नातुं मार्जितुमेव च ;
उद्धतः परुषश्चेत् स्यात्, दंडनीयो भवेत्तदा ;
"शठं प्रति शठं कुर्यात्, सादरं प्रति सादरं"।
निश्चयेन मलं वर्ज्यं; जातिनामैव नैव तु।

(२०) प्र० 'अन्तरप्रभवा'श्चापि मनुना सन्ति वर्णिताः ;
उक्तं च, स्पृष्ट्वा चंडालं सचैलं स्नानमाचरेत् ;
जन्मना ऽस्पृश्यता तस्य सूच्यते नहि किं तथा ?
कथं तेषां समाधानं श्लोकानां संभविष्यति ?

उ० स्मृत्युक्ताः प्रायशः सर्वाः अपि 'संकर'-जातयः
भारते न-उपलभ्यंते साम्प्रतं, कालभक्षिताः ;
यथा—ऽम्बष्ठो, निषादोग्रौ, सूतः, पारशवस्तथा,
क्षत्ता, मागध-वैदेहौ, धिग्वणाऽयोगवौ अपि,

आवृतो, पुक्कसो, वेणः, शैखः, कुक्कुटकस्तथा,
आवंत्य-वाटधानौ च, पुष्पधो, भूर्जकंटकः,
झल्लो, मल्लो, खसो, मैत्रो, निच्छिविः. करणस्तथा,
सुधन्वाचार्य-कारूपौ, विजन्मा, सात्वतोऽपि च;
ईदृशानि तु नामानि न श्रूयन्तेऽद्य भारते।
श्रूयंते 'गणनायां' तु मनुष्याणां, सहस्रशः,
यानि, अद्य, तानि स्मर्यन्ते कस्यांचिदपि न स्मृतौ:
यथा हि–ओरावँ–संताल–मुंडा–होस्–खोंड–खारियाः,
विर्होर–विर्जिया–जूआङ्–कोखा–मालरियास्तथा,
सौरिया–पहिया–तोडा–वडगा–तीय–पेरियाः,
नमःशूद्राः, ढेढ–चूड़ा–मेहतराः, लालवेगिनः,
गड़ावा–वाथुड़ी–चेरो–गोंड़–खर्वार–थारवः,
कोरा-सवारा-महली-वेदियाश्च-वहेलियाः,
अगर्या-लोनिया-वौरी-वेरिया-भातियास्तथा,
भुइया-वेल्दार-भुइमाली-विझिया-विन्द-भूमिजाः,
धोबी-चमार-खटिक-डोम-हाजङ्ग-कर्वलाः,
मुंडा-नागा-लुशायि-आहोम्-कोल-भिल्ल-भरास्तथा,
पासी-वर्वार-हावूड़ा-चौरिया-कञ्जरादयः।
नहि ग्रन्थाक्षरैरेव शक्यः कर्त्तुं, कथंचन,
निर्णयो विषये तासां स्पृश्याऽस्पृश्य-विवेचकैः।
मन्वादिस्मृतिपूक्तं यज् 'जात्याऽस्पृश्यस्य' लक्षणं,
तदद्य काले निश्चेतुं न कथंचन शक्यते।
जन्मनाऽस्पृश्यतायास्तु नास्ति प्रत्यक्षलक्षणं;
नोत्कीर्णं अस्ति कस्यापि भाले तज्जातिनाम वै।
ब्रह्म-क्षत्र-विशां चापि, शतशो भेदितास्तु याः
जात्यु-पो-पो-प-जातीनां तासां नास्ति स्मृतौ प्रमा।

यथा हि—ब्राह्मणाः संति, गौड़ा, वांगाश्च, गौर्जराः,
काश्मीरकाः, नाम्बुदिर्याः, कौंकणाः, मालवास्तथा,
सारस्वताः, द्राविडाश्च, औदीच्या, मैथिलाः अपि,
महाराष्ट्राः, कान्यकुब्जाः, शरयूपारकास्तथा,
तेलुगू-त्कल-कालिङ्गाः, शाकद्वीपोद्भवादयः;
प्रायशो देशभेदेन जातास्ते भिन्नसंज्ञकाः,
विवहंति न चाऽन्योऽन्यं, न-आशयंति परस्परं,
स्वं स्वं श्रेष्ठतमं चापि प्रत्येकं खलु मन्वते।
क्षत्रियाश्चापि शतधा संति भारत-भूतले;
सूर्यवंशिनः एवैके, ह्यपरे सोमवंशिनः,
रघुवंशभवाश्चान्ये, यदुवंशभवाः परे,
सोलंकिनः, प्रमाराश्च, चोहानाः, वैसवारकाः,
शीशोदियाख्याश्चैवान्ये, राठोराख्यास्तथाऽपरे,
विसेनाः, डोगराः, थापा-गुरुङ्-इत्यादि नामकाः;
उपवीतं धारयंति केचिन्, नैव तथाऽपरे;
वैश्याश्च शतधा ह्येवं भारते साम्प्रतं स्थिताः;
खंडेलवालाः, श्रीमालाः, जायस्वालास्तथैव च,
अग्रवालास्तथोस्वालाः चूरूवालास्तथाऽपरे,
वीसा-दसा-रौनिहार-रोहतगी-सेट-चेटिनः,
रीतिभिर्भोपणैर्देशैर्वंशैरिष्टैश्च भेदिताः।
खत्री-कायस्थ-भेदाश्च, साध-दोसाधकास्तथा,
भवंति बहवश्चान्ये, 'गणनायां' तु येऽङ्किताः;
क्षत्रियान् वा ऽथ वैश्यान्वा ते आत्मानं तु मन्वते।
तथैव शतधा शूद्राः ख्याताः भारतभूमिषु,
माली-कुम्हार-ग्वालाश्च, ऊँटहार-गड़ेरियाः,
सुनाराश्च, लुहाराश्च, ठठेराश्चापि जाटकाः,

कोरी, कुन्बी च, काछी च, कुर्मी चेत्यादयो बहु ;
एतेषु केचिदात्मानं स्व-स्व-वृत्त्यनुरूपतः ,
वैश्यान्वा, क्षत्रियान्वापि, ब्राह्मणान्वा तथा पुनः ,
देशकालानुसारेण मन्वते हि, यथोचितं ;
विवादोऽपि महांस्तत्र प्रांते प्रांते विजृम्भते ,
'ब्राह्मणेतरवर्णानां' 'ब्राह्मणानां' तथान्तरे ;
'ब्राह्मणाः' वयमेवात्र, सर्वेऽन्ये शूद्रजातयः ,
आगृह्णन्त्येवं एके तु, तत्राऽन्ये च विरुन्धते ।
एतानि जाति-नामानि न 'स्मृतानि' तु कुत्रचित्
स्मृतिकारैर्, न चैतासां विवादशमनाय च
निर्देशः कोपि लिखितः, वर्णानां निर्णयाय च ।
"तस्मात्, कौंतेय, विदुषा, धर्माऽधर्म-विनिश्चये ,
बुद्धिमास्थाय, लोकेऽस्मिन्, वर्त्तितव्यं कृताऽत्मना ; ×
न धर्मः परिपाठेन शक्यो, भारत, वेदितुं" ; (म० भा०)
"समाम्नानेन कृच्छ्रा तु, शक्या लक्षणकर्मणा,
समाप्तिः सर्वधर्माणां"—आपस्तम्बोऽब्रवीदृषिः । (धर्मसू०)
भूकम्पेनेव महता यथा विध्वंसिते पुरे ,
शिष्टेष्टकादि संगृह्य, नवं निर्मीयते पुरं ,
हिन्दूसमाजस्य तथा नवनिर्माणमीप्सितं ।
"तपो-बीज-प्रभावैस्तु, ते गच्छंति, युगे युगे ,
उत्कर्षं चाऽपकर्षं च मनुष्येष्विह जन्मतः ,
शूद्रो ब्राह्मणतामेति, ब्राह्मणश्चैति शूद्रतां , ×
कुलान्यकुलतां यांति", कुलतामकुलानि च । (म०)
सम्बाधे संकुले जाते, जातीनां, धर्मकर्मणां ,
विना पुनःसंस्करणं समाजस्य, न नो गतिः ।
आप्तदर्शितमार्गेण, कर्मवर्णात्मकेन च ,

सकलं संभवत्यद्य; शतं संशप्तकाः यदि
उद्युज्येरन् कटिं बध्वा, स्वान्तं कृत्वा दृढं तथा,
"भविष्यतीत्येव मनः कृत्वा सततं अव्यथाः", (म० भा०)
प्रचरेयुश्च सर्वत्र, बुद्धवत्, शंकरादिवत्,
सिद्धान्तान् ख्यापयन्तश्च वर्णाश्रमनिबंधनान्,
बोधयन्तश्च, तत्त्वेषु तेषां, सर्वान् जनानपि।
"अव्रतानां, अमंत्राणां, जातिमात्रोपजीविनां,
सहस्रशः समेतानां परिषत्त्वं न विद्यते;
यं वदंति तमोभूताः मूर्खाः धर्मं, अतद्विदः,
तत्पापं शतधा भूत्वा तद्वक्तॄन् अनुगच्छति"; (म०)
"सर्वेषां च सुहृन्नित्यं, सर्वेषां च हिते रतः,
कर्मणा मनसा वाचा, स धर्मं वक्तुमर्हति"; (म० भा०)
"धर्माऽधर्मौ न चरतः 'आवां स्वः' इति वादिनौ;
न गंधर्वाः, न पितरः, देवाः आचक्षते नहि,
'धर्मोऽयं, वाऽप्यधर्मोऽयं', लोके प्रत्यक्षतां गताः;
सम्यग्विनीताः, 'वृद्धाऽर्याः', आत्मवंतो, ह्यलोलुपाः,
अदाम्भिकाः प्रशंसंति यं, स धर्मो भवेद् ध्रुवं;
यं पुनस्ते तु गर्हन्ते सोऽधर्म इति निश्चितः"; (आप०धर्मसू०)
निवारणार्थं अर्तीनां अर्तुं योग्यो भवेत् तु यः,
अर्यंते च सहायार्थं आर्तैः, 'आर्यः' स उच्यते।
"संमर्षिणः, धर्मकामाः, युक्ताः, लोकहिते रताः,
अरूक्षाश्च, तथाऽऽयुक्ताः" लोकैर्निर्णयकर्मणि,
निर्णयंति यथा, आचारः स एव स्यात् सुसम्मतः, (तै० उ०)
यथैव परिकल्प्यंते, लौकिके राजशासने,
'क़ानून'-इति नवाः धर्माः, 'असेम्ब्ली-कौन्सिला'दिभिः।
व्यवहारेण शास्त्राणि, व्यवहाराश्च शास्त्रतः,

ये शोधयंति कालज्ञाः, धर्ममर्मविदो हि ते।
"अनाम्नातेषु धर्मेषु, कथं स्याद्, इति चेद् भवेत्,
यं 'शिष्टाः' 'ब्राह्मणाः' ब्रूयुः, स धर्मः स्याद् अशंकितः,
धर्मेणाधिगतो यैस्तु वेदः, सपरिबृंहणः,
ते 'शिष्टाः' ब्राह्मणाः ज्ञेयाः, श्रुतिप्रत्यक्षहेतवः;
एकोऽपि वेदविद् धर्मं यं व्यवस्येद् द्विजोत्तमः,.
स विज्ञेयः परो धर्मो, यदि सोऽध्यात्मवित्तमः;
अन्ये कृतयुगे धर्माः, त्रेतायां द्वापरे परे,
अन्ये कलियुगे नृणां, युगभेदाऽनुरूपतः; (म०)
"अश्वालम्भं गवालम्भं सन्न्यासं पलपैतृकं,
देवराच्च सुतोत्पत्तिं, कलौ पंच विवर्जयेत्;
एतानि पंच कर्माणि निषिद्धानि महात्मभिः,
समयस्य गतिं दृष्ट्वा, व्यवस्थापूर्वकं बुधैः";
अन्ये वदन्ति यद् धार्यः सन्न्यासस्तु कलावपि;
श्लोकैरेतादृशैः स्पष्टं स्मृतिकारैस्तु सूचितं,
धर्माः सन्त्येव.संस्कार्याः, काले, काले, विवेकतः।
अस्पृश्यतायाः विषये पूर्वमेव विचारितं,
जन्मनाऽस्पृश्यतायास्तु नाऽस्ति प्रत्यक्षलक्षणं।
"अतः 'चंडालः' एवैकः स्पर्शादौ तु निरस्यते
प्रतिलोमतो" हि, नैवाऽन्यः, इत्येवं निश्चिनोति च
कुल्लूको मनुटीकायां बहु सूक्ष्मं विचार्य च;
(म०; अ० १०, श्लो० १३)
'चंडाल' नामिका जातिर्नाऽद्य काचित्तु लक्ष्यते;
'चंडालाः' चाऽति'चंड'त्वात् संति सर्वासु जातिषु।
अस्पृश्यता निमित्तेन, न जात्या, धर्मसम्मता;
यथा महापातकिनः, यथा संचारिरोगिणः,

यथा च मलदिग्धांगाः, उदक्याऽऽशौचिनो यथा ;
अस्पृश्याः सर्वे एवैते, निमित्तैर्, न तु जन्मतः ।
इदृशी-अस्पृश्यता चाऽस्ति वैरिणोस्तु परस्परं ;
चंडमुंडादिदैत्येभ्यो ऽस्पृश्या चामुण्ड-चंडिका ;
अपयाते निमित्ते तु स्पृश्यतैवाऽवशिष्यते ।
एके विवेकमिच्छन्ति कर्त्तुं 'स्वच्छ-पवित्रयोः' ;
वदंति 'स्वच्छतां' 'दृष्टां', 'अदृष्टां' तु 'पवित्रतां ;
एकां स्थूलां च बाह्यां च, सूक्ष्मामन्यां तथाऽन्तरीं ।
तत्तु न स्मृतिकाराणां ऋषीणामस्ति सम्मतं ।
बाह्याऽभ्यन्तरवस्तूनां एकत्र, भगवान् मनुः,
शुद्धिप्रकरणे, वक्ति प्रकारान् शौचसाधकान् ।
श्लोको भगवता प्रोक्तो मनुनाऽत्र निदर्शनं,
यत्र 'पू'-धातुरेवैकः उभयार्थं प्रयुज्यते—
"दृष्टिपूतं न्यसेत् पादं, वस्त्रपूतं पिबेद् अपः,
सत्यपूतां वदेद् वाचं, मनःपूतं समाचरेत्" ; (म०)
'शुचिः' 'शुद्धः' 'पवित्रश्च' 'मेध्य'श्चेति पदान्यपि
प्रयुज्यन्ते समाऽर्थानि मनुना तु पुनः पुनः—
"त्रीणि देवाः 'पवित्राणि' ब्राह्मणानां अकल्पयन्,
अदृष्टं, अद्भिर्निर्णिक्तं, यच्च वाचा प्रशस्यते ; ×
नित्यं 'शुद्धः' कारुहस्तः, श्वा मृगग्रहणे 'शुचिः' ; ×
योऽर्थे 'शुचिः' स हि शुचिः, न मृद्वारिशुचिः शुचिः ; ×
मक्षिकाः, विप्रुषः, छाया, स्पर्शे 'मेध्यानि' निर्दिशेत्" । (म०)
चंडालदेहे व्याप्ता चेत् 'सूक्ष्मा'-अशोध्या-'अपवित्रता'
'जात्यैव', 'सूक्ष्म-देहं' सा नूनं स्पृष्टिनः आविशेत् ;
तदाऽस्य स्पृष्टिनः शुद्धिः स्थूलस्नानान्न सम्भवेत् ।
अन्यच्चात्र विचार्यं स्यात्—"श्वा मृगग्रहणे शुचिः" ;

मृगमांसं शुना दष्टं श्वा-उच्छिष्टं भक्ष्यते यदा
ब्रह्म-क्षत्रादिभिः, जात्या कीदृशी-अस्पृश्यता भवेत्?
दृष्टाद् अदृष्टं, चादृष्टाद् दृष्टं, उत्पद्यते पुनः ;
चक्रवत्परिवर्त्तेते, ऐहिकाऽमुष्मिकौ सदा ,
शारीर-मानसौ, स्थूल-सूक्ष्मौ वा, कार्य-कारणे ,
वृक्ष-बीजे, सृष्टि-लयौ, जागरः स्वप्न एव च ,
"अव्यक्ताद् व्यक्तयः सर्वाः प्रभवंत्यहरागमे ,
रात्र्यागमे विलीयन्ते तत्रैवाऽव्यक्तसंज्ञके" ; (गी०)
नाऽत्यंतिकं तु पार्थक्यं सिध्यतीह कथंचन ,
'पवित्रता-स्वच्छतयोः', 'दृष्टाऽदृष्टपदार्थयोः' ;
प्रत्यक्षं चाऽप्युभौ-एतौ-ओत-प्रोतौ परस्परं ;
"ध्यानिकं सर्वमेवैतद् यद्-एतद्-अभिशब्दितं" ; (म०)
'संकल्पस्य' हि-'अदृष्टस्य' 'कामस्य' जगदात्मनः
सृष्टिः सर्वाऽपि 'दृष्टा'-इयं स्थूलभूतमयी फलं।
'कर्मणै'वान्ततो गत्वा 'नीचं' जन्म, 'उच्चं' एव, वा ;
एवं बलीयः 'कर्म'-एव वर्त्तते 'जन्म-कर्मणोः'।
चत्वारोऽपि हि यद्वर्णाः एकस्य ब्रह्मणः सुताः ,
एतेन रूपकेणैव खंड्यते 'जन्म-वर्णता'।
अस्पृश्यो नैव पादोऽस्ति शरीरे कस्यचित् क्वचित्।
हिंस्राश्च, दस्यवः, 'चंडाः', मलाक्ताः, भीमदर्शनाः ,
असभ्याः दूरतो वर्ज्याः, नाऽस्पृश्याः एव केवलं ,
शासकैर्दंडनीयाश्च, प्रवास्याश्चापि दूरतः ;
यथाऽद्य काले संत्येव पापाः काश्चन 'जातयः' ,
( 'जरायम्-पेशा', क्रिमिनल्-ट्रैबूज़् )
यासां सर्वे नराः नार्यः कुर्वते चौर्य-जीविकां ;
स्थाप्यंते ताः निरीक्ष्यंते बहिर्ग्रामं तु यामिकैः ,

परिव्रज्यां च कार्यंते स्थानात्स्थानं, पुनः पुनः,
कर्पटादिवितानेषु वसन्त्यः 'कंजरा'द्यः।
"चंडाल-श्वपचानां तु बहिर्ग्रामात् प्रतिश्रयः", ×
इत्येवं मनुरप्याह, "परिव्रज्या च नित्यशः; ×
वसेयुरेते विज्ञाताः, वर्त्तयन्तः स्वकर्मभिः; (म०)
(२१) प्र० शतं शतं जातयस्तु, ब्रह्म-क्षत्र-विशामपि,
सहस्रशश्च शूद्राणां, 'अस्पृश्यानां' परस्परं,
याः, तासां ननु वर्णेषु चतुर्ष्वेव कथं भवेद्
राशीकरणं अद्यत्वे ? दुस्तरं तत्प्रतीयते।
उ० विना 'दंड'-भयं शक्यं मर्यादास्थापनं नहि;
"दंडस्य हि भयात्सर्वं जगद्धर्मे प्रतिष्ठते";
स्थाप्येत चाऽप्यनायासं मर्यादा-इयं पुनर्ननु,
'मनुष्य-गणनायां' चेद् ईदृशं शासनं भवेत्—
"यः कोऽपि यस्याः कस्याश्च जातेः स्याज् ज्ञान-जीवनः,
'विद्योपजीवि'-वर्णः सः लिख्येत, 'ब्राह्मणो'ऽथवा;
'रक्षोपजीवि'-वर्णश्च सर्वः शस्त्रास्त्र-जीवनः,
'क्षत्रियो'-अंक्येत वा; तद्वत् सर्वः कृष्यादि-वृत्तिमान्
'वार्त्तोपजीवि'-वर्णस्तु, 'वैश्यो' लिख्येत वा तथा;
'श्रमोपजीवि'-वर्णश्च 'शूद्रो' वा, भृति-जीवनः।
एवं सर्वमनुष्याणां चतुर्विभजनं भवेद्
अनायासेन विस्पष्टं। 'विशां' संख्या महत्तमा
भाविनी तत्र; यत् प्रायः सर्वेऽस्पृश्याः' कृषीवलाः;
'जातिनाम्ना' कृतं तेषां अस्पृश्यत्वं च विलोप्स्यते,
परिवर्त्तेन नाम्नस्तु; 'माया' वै 'नाम-रूपयोः'।
किंतु 'दंडः', यदा 'धर्म्यः', तदैव प्रभवेत् सुखं;
सर्वमान्यं तदैवेदृक् प्रवर्त्तेताऽपि 'शासनं',

'भूयांसो' देश-वृद्धाः तद् धर्म्यं चेद्-अनुमन्वते ,
ये लोक-मान्याः श्रद्धेयाः; क्षोभो लोकेऽन्यथा भवेद्
गताऽनुगतिके, शिक्षाहीने, पूजित-पूजके ,
मूढग्राहैर्गृहीते च; घोरः स्याच्चापि विप्लवः ।
अतोऽस्मिन् विषये, देशमान्यानामेव सम्मतिः
उद्बोध्या प्रथमं; पश्चात्, तद्द्वारा, लोकसम्मतिः ।
अनुगाम्यनुगम्यानां बुद्धिसाम्यं विना नहि
भारतीयसमाजस्य नवं संस्करणं भवेत् ।
गताऽनुगतिकानां हि बुद्धिर् निर्णायिका-अंतिमा ;
'महाजनस्यैव हि बुद्धिरीष्टे' ।
तस्याः श्रद्धा तु संग्राह्या, नेतृभिः सत्तपस्यया ।
प्रत्यक्षमेव पश्यामो, बहवो, यद्, दिने दिने ,
त्यजंत्येकं तु यं कंचिद् धर्मं, गृह्णंति चाऽपरं ;
न महर्षिः, न मसीहो, न रसूलो, न पुस्तकं ,
वेदस्य वा, कुरानस्य, बैबलस्याऽथवा तथा ,
न शब्दबहुलास्तर्काः, निरोद्धुं शक्नुवंति तान् ;
तेषामन्तर्गता बुद्धिर् आत्मीयैव नियामिका ,
मध्ये च तत्तद्धर्माणां आचार्याणां विवादिनां
कुरुते प्राड्विवाकत्वं, निश्चयं चान्तिमं, तथा
यथैव स्वस्य कल्याणं श्रद्दधाति कथंचन ।
ईश्वरोस्ति, न वा सोस्ति, अस्ति चेत् कीदृशोस्ति सः—
इत्यत्रापि विनिर्णेत्री बुद्धिरेवास्ति सर्वथा ;
ईश्वरास्तित्वनास्तित्वं अध्यवस्यति सा, यदा ,
तन्, मान्यताऽमान्यतयोः पुस्तकानां तु का कथा ?
कुनायकैः स्वार्थपरैः बहुधा सा प्रतार्यते ,
दुःखदान् असमीचीनान् निर्णयाँश्चापि कार्यते ,

तानेव 'बुध्वा' 'ऽज्ञानेन' साधून् लोकहितान् अपि ;
अतो हि सर्वप्रथमं कर्त्तव्यं 'नेतृ-बोधनं',
सद्धर्मरूपे सज्ज्ञानैः ततस्त'न्नीत-शिक्षणं'।
सुष्ठु-दुष्ठु-फलानां हि ज्ञापनैर्बुद्धिशोधनं,
कार्याणां कारणानां च विस्तरात्प्रतिपादनैः।
अत एवात्र हिन्दूनां विस्तराद् गदिता रुजा,
चिकित्सायाः उपायश्च तथैव कथितोऽखिलः ;
विचारयन्तु सहृदः, सुहृदो भारतस्य च,
तथा मानवजातेश्च, "सर्व-भूत-हितेरताः",
न केवलं स्वार्थपराः, स्वयं निर्धारयन्तु च,
बोधयन्तु तथा चापि 'वासुदेवं' 'महाजनं',
भारतोद्धारकार्याय, मानवानां हिताय च।
(२२) प्र० भारते येऽन्यधर्मास्तु प्रवृत्ताः बहुवत्सरैः,
तेषां हि मानवे धर्मे भवेत् सम्मेलनं कथं ?
'शुद्धिं' कृत्वा न किं ग्राह्याः हिन्दुष्वेतेऽन्यधर्मिणः ?
उ० यथैव शैव-शाक्तानां, वैष्णवानां यथैव च,
जातीनां त्रिसहस्राणां हिन्दूनां मेलनं यथा,
तथैव सर्वधर्माणां कर्तुं शक्येत मेलनं ;
विभाज्यास्तेऽपि 'वर्णेषु' चतुर्ष्वेव हि 'कर्मणा'।
'शुद्धिं'-प्रकारो व्यर्थश्च निष्फलश्च परीक्षितः ;
अपि वा दुष्फलश्चैव, प्रत्युत, द्रोहवर्धनः ;
'कर्म-वर्ण'-व्यवस्थायाः अभावे नितरामपि,
'हिन्दुत्वे' च तथाऽन्योऽन्याऽस्पृश्य-जात्यात्मके सति,
मुस्लिमः, क्रिश्चनो वापि, तथा कोऽप्यन्यधर्मकः,
'शुध्या' हिन्दू-क्रियेताऽपि, 'जातिः' काऽस्य भविष्यति ?
न विवाहादि-सम्बन्धो 'जाति'-निर्धारणं विना ;

प्रवृत्ते 'जाति-हिन्दुत्वे', यदि 'शुद्ध्या' प्रवेशनं
विशेष-'जातौ' शक्येत कर्त्तुं, तत्रैव सा-उचिता।
'शुद्ध्या' हिन्दुत्वमानीताः अपि केचिज्जनाः, परं
व्यवहारेषु विहताः, विवाहादिक-कर्मसु,
'जात्य'भावात्, पुनर्याताः अन्यधर्मांस्तु तान् प्रति,
रुषा द्विगुणया चापि, घृणया चापि, हिन्दुषु।
इयं 'जाति'-प्रथा, 'जाति-बहिष्कार'-प्रथा, तथा
कालरात्रिरिवाऽयाता हिन्दूनां ध्वंसकारिणी।
आबालवृद्धं वङ्गेषु प्रसिद्धेयं कथा, यथा
राजनारायणो विप्रः, स्वजातीयैर्बहिष्कृतः
मिथ्याभिशापैः, संक्रुद्धः, गत्वा दाऊद-नामकं
नव्वाबं, तस्य देशस्य शासकं, मुस्लिमोऽभवत्,
दिल्लीपुरे तु यत्काले सम्राड् अकबरो बभौ;
क्रमात्, नव्वाब-सेनायां मुख्यः सेनापतिर्भवन्,
'काला-पहाड़'-इत्येतन्नाम्नैवाऽसीत् स विश्रुतः,
कायस्य च विशालत्वात्, कृष्णवर्णात् तथैव च;
ततः, सेनापतिर्भूत्वा, देवतायतनानि, सः,
निस्तेजोमूर्तिपूर्णानि, भेदभावकराणि च,
दुर्भावपूर्णनिर्विद्यदेवलैराचितानि च,
क्रोधाद् बभञ्ज हिन्दूनां, शतशश्च सहस्रशः,
वङ्गेषु च, विहारेषु, तथा-औड्र-प्रान्तभूमिषु,
लक्षशश्च स्वजातीयान् गोमांसान्यप्यखादयत्,
मुंडयित्वा शिखां तेषां, सूत्रमत्रोटयत् तथा;
कृताः 'अशुद्धाः' तेऽप्येवं स्वजातीयैर्बहिष्कृताः,
सर्वथा मुस्लिमी-भूताः, तेषां वंशास्तथैव च;
तत्कालीनैर्महामोहग्रस्तैः पंडितमानिभिः

न पालिता मनोराज्ञा, शौचदम्भान्धदृष्टिभिः—
"सर्वान् वलकृतान् अर्थान् अकृतान् मनुरब्रवीत्" । (म०)
ईदृशैः कारणैरेव, संख्या ह्यधिकतां गता
मुस्लिमानां तु वंगेषु, हिन्दूनां ह्रासमागता ।
काश्मीरदेशस्यैवापि वृत्तान्तं खलु तादृशं ।
चतुर्दश-शताब्द्यां तु सुल्तानोऽभूत् सिकन्दरः
महाराजः प्रभुस्तत्र, भृशं हिन्दुत्व-घातकः ।
किंवदन्ती तथा चेयं, विप्रस्तस्याऽभवत् पिता,
मंत्री च पूर्वराजस्य, यो राजा हिन्दुरेव हि
राजवंशक्रमेणाऽसीद्; हत्वा तं सः स्वयं प्रभुः
वभूव, मुस्लिमानां च केषांचन सहायतः;
अंगीचकार धर्मं च स्वयं एवाऽपि मुस्लिमं ।
सिकन्दरोऽयं सुल्तानः, तत्पुत्रो, नवमुस्लिमः,
'भूयासं पुनरेवाऽहं हिन्दुर्' इत्याह पंडितान्;
ते च तन्नाऽन्वमोदन्त, तमःकालप्रचोदिताः,
'जन्मनैवास्ति हिन्दुत्वं, मुस्लिमस्त्वमजायथाः,
प्राप्तुं शक्ष्यसि हिन्दुत्वं अपरेणैव जन्मना'।
आकार्य 'मौलवीन्' पश्चात्, सोऽवादीत् तान् रुषा ज्वलन्,
'नाऽभूवं अद्य यावत्तु, निविष्टो मुस्लिमो; ऽधुना
तथा भवितुं इच्छामि; किं कृत्यं मम; कथ्यतां;
ऊचुस्ते, 'पंडितान् एतान् अस्मद्धर्मस्य वैरिणः,
बद्ध्वा, क्षिप्त्वा प्रसेवेषु, वितस्तायां निमज्जय';
एवमेव चकाराऽसौ; मन्दिराण्यभनक् तथा
शतशो; मुस्लिमीचक्रे वलेनैव हि 'पंडितान्'
सहस्रशो, लक्षशश्च; यथाऽलुप्यत हिन्दुता
कश्मीरदेशे, यत्राऽसीत् शुद्धाऽर्याणां पुरा जनुः ।

श्वेताः, प्रसन्नवदनाः, नीरोगाः, स्थिरयौवनाः,
मैत्राश्चापि, सुरूपाश्च, सुबलाश्च, सुबुद्धयः,
शिष्टाः, सभ्याः, सदाचाराः, विश्वास्याः, सत्यवादिनः,
बहुविद्याश्च बहवः तेजस्वन्तस्तपस्विनः,
यत्राऽभवन् पुरा, तत्र सर्वमेवाऽन्यथा कृतं।
सा स्वर्ग-भूमिर्नरकीभूता, प्रज्ञाऽपराधतः
धर्मिणंमन्यमानानां, नितरामल्पदर्शिनां।
दश प्रतिशतं तत्र हिन्दवः संति साम्प्रतं,
नवतिर्मुस्लिमाश्चापि; श्रीः शीलेन सह-अर्दिता;
दुराचारस्य बाहुल्यं, स्वभावस्य च क्षुद्रता,
कुरूपत्वं च बहुशः, वर्णे गौरे च सति-अपि,
दरिद्रत्वं च, दीनत्वं, शिक्षाऽभावः परस्तथा,
पशुवज्जीवनं चाऽपि, कृच्छ्रेण, भयसंकुलं—
या 'देव-भूमयो' ह्यासन्, तासां अद्य तु-इयं दशा।
सर्वप्रान्तेषु सन्त्येव वृत्तान्तानीदृशानि च।
प्राक्तनी-इयं महाभ्रान्तिर्नाऽद्याऽपि विनिवर्त्तते,
यज जन्मनैव हिन्दुत्वं, वर्णत्वं जन्मनैव च;
एतावताऽपि भोगेन दुःखानां सा न शोधिता;
विध्वंसनाय हिन्दूनां निस्तन्द्रं प्रचरत्यसौ।
विंशद्वर्षाः ततो याताः, मोपलानां उपद्रवः
मुस्लिमानां अभूत् तीव्रः, प्रान्ते मद्रासनामके,
मलाबारप्रदेशे च; हिन्दवो बहु सूदिताः,
नाम्बुदिर्याः ब्राह्मणाश्च, नायराः क्षत्रियास्तथा।
'स्त्रीराज्यं' तत्प्रदेशोऽस्ति, तथाऽचाराः विलक्षणाः,
आचारेभ्यो भृशं भिन्नाः हिन्दूनां अन्यप्रान्तिनां।-
'मा-पिल्लाः' 'मोपलाः' वा-इति कथं तत्र समागताः

कथं निवासिताः पूर्वं तत्रत्यैरेव हिन्दुभिः,
कथा-इयं महती सर्वा नाऽत्र वर्णयितुं क्षमा।
अस्तु; तैरेव 'मा-पिल्लैः' विप्लवोऽयं महान् कृतः;
स्त्रियो नराश्च हिन्दूनां दूषिताः निहतास्तथा।
सेनां सम्प्रेष्य 'मा-पिल्लाः' हत्वा नीताः वशं पुनः,
दंडिताश्च यथायोग्यं, प्रान्तीयैर् आंग्ल-शासकैः।
किंतु दूषित-हिन्दूनां 'शोधनाय'-उद्यमस्तु यः
कृतोऽन्यैर् हिन्दुभिस्तत्र, शिक्षितैः, समवेदिभिः,
सानुक्रोशैः, दयार्द्रैश्च, नीतिज्ञैर्, दूरदर्शिभिः,
नवां अवस्थां जानद्भिः, तं 'विप्राः', नाऽनुमेनिरे;
शृंगेरि-शंकराचार्यः, तत्रत्यानां 'जगद्गुरुः',
शुद्धि-प्रदानाद् विमुखः एवाऽसीत्, श्रूयते तथा;
तथैव विमुखाश्चासन् बहवः काशि-पंडिताः;
आंग्लशासकसौहार्दात्, प्रभावाद्, यंत्रणादपि,
दाक्षिणात्यैः कृता तेषां 'शुद्धिः' 'विप्रैः' कथंकथं,
स्वजातीयैस्तथा जातौ कृच्छ्रेण स्वीकृताः च ते,
ईदृक्ष्वपि दयार्हेषु हृद्हीनैर् भूरि निष्ठुरैः,
धर्मतत्त्वानभिज्ञैश्च, नितरां मूढबुद्धिभिः,
स्वकीय-'शौच'-दम्भेनाऽविष्टैर् वेतालवद् भृशं,
स्वार्थमप्यप्रपश्यद्भिर् भाविनं दूरवर्त्तिनं।
शिखा चेन्मुंडिता, सूत्रं त्रोटितं च बलादपि,
अभक्ष्यं वाऽप्यपेयं वा खादितं पायितं बलात्,
'हिन्दुत्वं' हि कथं नष्टं आमूलं, तावतैव तु?
किमेतेषां प्रतीकारः सर्वथैवास्त्यसम्भवः?
शिखा सूत्रे न धार्येते बालैः, सन्न्यासिभिस्तथा,
न शूद्रैर्बहुभिः सूत्रं, किमतस्ते न हिंदवः?

ब्राह्मणाः क्षत्रियाः शूद्राः खादंत्येवहि भूरिशः ;
क्षत्रियाश्चापि शूद्राश्च पिबन्ति तु सुरामपि ;
न चैतद् गण्यते पापं तेषां तेषां तु जातिषु ।
लभ्या मनुस्मृतिश्चापि मांसं बहु विनिन्दति ;
राजसीं प्रकृतिं दृष्ट्वा क्षत्रियाणां च, कर्म च ,
अनुजानाति मांसं च, श्लाघमानापि वर्जनं ; (म०)
"न मांसभक्षणे दोषो न मद्ये न च मैथुने ,
प्रवृत्तिरेषा भूतानां, निवृत्तिस्तु महाफला ;
मां सः भक्षयिताऽमुत्र यस्य मांसं इह-अद्मि-अहं ,
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ;
नाऽकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ,
न च प्राणिवधः स्वर्ग्यः, तस्मान्मांसं विवर्जयेत् ;
योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया ,
स जीवंश्च मृतश्चैव न क्वचित्सुखमेधते ;
यो बंधनवधक्लेशान् प्राणिनां न चिकीर्षति ,
स सर्वस्य सुखप्रेप्सुः सुखमत्यन्तमश्नुते ;
यद् ध्यायति, यत्कुरुते, धृतिं बध्नाति यत्र च ,
तदवाप्नोत्ययत्नेन, यो हिनस्ति न किंचन ;
समुत्पत्तिं च मांसस्य, वध-बंधौ च देहिनां
प्रसमीक्ष्य निवर्त्तेत सर्वमांसस्य भक्षणात् ;
अनुमन्ता, विशसिता, निहन्ता, क्रय-विक्रयी ,
संस्कर्त्ता च, उपहर्त्ता च, खादकश्चेति घातकाः ;
वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ,
मांसानि च न खादेद् यः, तयोः पुण्यफलं समं ;
फलमूलाशनैर्मेध्यैर्मुन्यन्नानां च भोजनैः ,
न तत्फलमवाप्नोति यन्मांसपरिवर्जनात्" । (म०)

आरण्याः जन्तवो यस्मात् कृषिं हिंसन्ति भूरिशः,
मृगया च वधः तेषां, तथा तन्मांसभक्षणं,
'राजसैः' 'रक्षकैः', तत्र कथंचिद् अनुमन्यते;
श्रान्तस्याऽखेटकस्याऽपि सद्यः प्रस्तुतमेव तद्,
भोज्यं; नाऽपव्ययोऽस्य स्याद्; विचारैरीदृशैरपि।
परमांसैः स्वमांसस्य पुष्ट्यै, स्वादाय चैव हि,
अहिंसकानां सौम्यानां पशूनां हननं, ननु,
स्वगृहे पालयित्वा च, भक्षणं—पापमेव तत्।
कार्ये त्वात्ययिके प्राप्ते, विशेषेण च हेतुना,
ईदृशानां च हननं अस्तु वैधं; न वार्यते;
यथाऽनुज्ञातमेवाप्तैः "औषधार्थं सुरां पिबेत्";
"लोके व्यवायाऽमिषमद्यसेवा नित्यास्ति जन्तो,र्नहि तत्र चोदना,
व्यवस्थितिः तासु विवाह-यज्ञ-सुराग्रहैः, आसु निवृत्तिरिष्टा"। (भा०)
भीष्मोऽप्यनुवदन्नर्थं मनूक्तं प्राह सद्वचः,
"उत्तमं भोजनं मांसं, द्वितीयं गोरसः स्मृतः, ×
न तु मांसं तृणात् काष्ठाद् उपलाद्वापि जायते,
हत्वा जन्तुं ततो मांसं, तस्माद्दोषो हि भक्षणे"। (म०भा०)
"गोत्रचिह्नं शिखाकर्म", हिन्दुत्वस्य न मर्म तत्,
इत्याह शबरस्वामी मीमांसा-सूत्र-भाषणे;
"यथर्षि शिखां दधाति, यथा वैषां कुलधर्मः;
दक्षिणतः कुभुजा वासिष्ठानां; उभयतः शिखा काश्यपानां;
मुण्डाः भृगवः; पंचचूडाः आंगिरसाः"। (शावरभा०)
यज्ञोपवीतं भ्रष्टं चेन् नवीनं किन्न धार्यते?
एतदर्थं तु मंत्रो हि ऋषिभिर्दर्शितः किल—
"यज्ञोपवीतं परमं पवित्रं, प्रजापतेर्यत्सहजं पुरस्ताद्,
आयुष्यमग्र्यं प्रतिमुंच शुभ्रं, यज्ञोपवीतं बलमस्तु तेजः"।

"सहयज्ञाः प्रजाः सृष्ट्वा"-इत्येवार्थोऽत्र कथ्यते।
अन्यद् अत्र विचार्यं स्यात्-'जन्मना' यदि वर्णता,
केनाऽपि पातकेनेयं कथमेवाऽपयास्यति?
'कर्मणा' चेद् इयं, तत् तु, वियुज्येत विकर्मणा,
संयुज्येत पुनश्चापि-उपयुक्तेन सुकर्मणा।
एतत्सर्वं तु विस्मृत्य धर्महेतुं, असद्ग्रहाः,
धर्ममर्मानभिज्ञाश्च, 'धर्म-धर्मेति' राविणः,
मोहान्धाः, दाम्भिकाः, पापाः, दयार्हेष्वपि निष्ठुराः,
स्वभ्रातॄन्, पीडितान् अन्यैः, पीडयन्ति-अधिकं पुनः;
कश्चित् स्वाङ्गानि-अथ-उत्कृत्य दद्याद् व्याघ्राय वै, यथा,
तथैवैतेऽन्यधर्मेभ्यो स्वकीयान् प्रददत्यपि,
हिन्दूसमाजं सकलं पातालं नेतुमुद्यताः।
हिन्दवो 'नीच'जातीयाः, 'उच्चं' मन्यैस्तिरस्कृताः,
प्रत्यहं यान्त्यन्यधर्मान्, पूर्वमेव-इति वर्णितं।
अन्ये 'धर्मध्वजाः' संति, धूर्त्ताः 'धर्मधुरंधराः',
'धर्माऽधिकारिणम्मन्याः' चित्ररूपधराः नटाः,
उपायैर्विविधैर्ये तु स्वार्थसाधनतत्पराः;
नाऽत्र वर्णयितुं शक्या तेषां तु महती कथा।
किन्तु सन्त्यन्यनेतारः, मुखराः, शूरमानिनः,
निर्व्यलीकं च हिन्दूनां पीड्यन्ते ये च पीडया;
तापितानां कम्पितानां निर्व्याजमनुकम्पिनः,
दुःखिताः परदुःखेन, तेषां च समवेदिनः,
परार्थिनः, आर्यशीलाः, उदाराः, हृदयालवः,
अत्याचारैः च संक्रुद्धाः ये परेषां तु हिन्दुषु;
ते विश्वसन्ति—'युद्धेन विजेष्यामो रिपून् वयं,
बलेनाऽभिभविष्यामः उद्धतान् अन्यधर्मिणः'।

ततः 'संगठनं' चापि हिन्दूनां यातयन्ति ते ;
धर्मध्वजैश्चोत्साह्यंते कार्येऽस्मिन्, कूटया धिया ,
'प्रभुताऽस्माकमेवान्ते भविता धर्मधूर्धूर्ताः' ।
'संग्रन्थनं', 'संघटनं', सिध्यतीह तु नैव तत् ;
यतस्तु हृदयं शूरमेषां, धीर्न तु मार्मिकी ,
नाऽन्विष्यति निदानं तु, न सा गम्भीरदर्शिनी ;
नेक्षते हिन्दुनां दोषान्; परेषामेव पश्यति ;
अत्याचारांस्तात्कालिकान् एव दृष्ट्वा प्रकुप्यति ;
प्राकृता नीतिरेवाऽस्याः–"शेषं कोपेन पूरयेत्" ।
आत्मीयानां रक्षणं च, रक्षणं चात्मनस्तथा ,
अवश्यमेव कर्त्तव्यं सर्वोपायैस्तु नित्यशः ;
"आततायिनमायान्तं हन्यादेवाऽविचारयन्" ,
"शठं प्रति शठं कुर्यात्, सादरं प्रति सादरं" ;
किन्तु नैतावतैवास्ति कार्यसिद्धिस्तु हिन्दुनां ;
एतेन तु सहैव-अन्यत् कृत्यं गुरुतरं किल ।
आक्रम-प्रतिकाराय नूनं शक्तिरपेक्षिता ;
न सा विना 'संघटनं', "संघे शक्तिः कलौ युगे" ;
नैव 'संग्रहणं' शक्यं, 'संघः', 'संहननं' मिथः ,
'संघातो' नैव, हिन्दूनां, यावत् स्यात् 'जन्म-वर्णता' ;
इत्येतद् विस्तरात् पूर्वं अस्मिन् ग्रन्थे प्रदर्शितं ।
परेषां तु विरोधाय 'संधिः', 'संघः', क्रियेत यः ,
न स्थिरो बद्धमूलोऽसौ; गलत्येवाऽचिरात्तु सः ।
"परैः परिभवे प्राप्ते वयं पंचोत्तरं शतं" , ( म० भा० )
इति क्षणिकः एवाऽसीत् संधिः अन्योऽन्यवैरिणां
पांडवानां कौरवाणां, गंधर्वैः सह संयुगे ;
भीमस्य तु तदैवासीन् मतिः कौरववैरिणी ,

"अस्माभिर्यदनुष्ठेयं गंधर्वैस्तदनुष्ठितं,
किमर्थं मोचयिष्यामः शत्रून् बद्धान् परैः"-इति; ( म० भा० )
"परस्परविरोधे तु वयं पंच, शतं च ते"-
इत्येव नीतिस्तत्राऽभूत् शाश्वती वंशनाशिनी।
शतानामेकतश्चापि, पंचानामेकतस्तथा,
संधिर्योऽभूद् दृढः, सोऽयं आमृत्योस्तु व्यवर्धत,
यतो नैसर्गिकी प्रीतिरभवत् तत्र कारणं,
परस्परहितायैव, परस्परविभूतये,
आत्मनां मंडनायैव, नाऽन्येषां खंडनाय तु।
हिन्दूनां ननु जातीनां भीमस्येवास्ति वै मतिः;
एकस्यां पीड्यमानायां जात्यां अन्या तु मन्यते
'अस्माभिर्यदनुष्ठेयं अपरैस्तदनुष्ठितं'।
वदंति केचिद्विप्रास्तु—'कृषेः प्रावरणं, यथा,
पशुभ्यो रक्षणायैव, क्रियते कंटकादिभिः,
तथा द्विजानां प्रावारो भवंति-अद्विज-जातयः'।
कूटा कापुरुषी नीतिः, रक्षकाः यत्र भक्षकाः,
पोषकाः शोषकाश्चैव, शिक्षकाश्चापि तक्षकाः,
—"यस्यांके शिरः आधाय जनः स्वपिति निर्भयः,
स एव तच्छिरश्छिन्द्याद्", एवं विश्वासघातिनी,—(म०भा०)
न-इयं नीतिः फलत्यद्य फलमाशासितं किल।
कंटकानि तु भक्ष्यंते उष्ट्रैराक्रमकारिणां,
कृपयश्चापि चर्व्यंते तदारोहैः सुखेन हि।
'संग्रन्थनं' अवस्थायां अस्यां, मरुमरीचिका।
विग्रहेण न जेष्यंति, संग्रहेणैव, हिन्दवः।
उपायः एक एवाऽद्य जगन्निस्तारकारकः,
न केवलं तु हिन्दूनां, अपि वै सर्वधर्मिणां

सर्वेषां मानवानां तु, येऽद्य द्रोहैरुपद्रुताः ।
"कृणुध्वं विश्वमार्यं" हि, वेदाऽऽज्ञा-एषा-एव पाल्यतां,
सर्वेषामपि धर्माणां मेलनं क्रियतां मिथः ।
प्रकारस्तस्य चैवैकः, न द्वितीयः प्रतीयते ;
चतुर्वर्णान्तर् एवैते आनीयेरन् समन्ततः,
सर्वेषामेव धर्माणां समस्ताः अनुयायिनः ;
धर्मग्रन्थाश्च सर्वेषां, पूज्याश्च पुरुषास्तथा,
वेदांशाः एव मन्यंतां, ऋषयोऽवतरास्तथा ।
"यद्यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा,
तत्तदेवाऽवगच्छ त्वं मम तेजोंऽशसम्भवं" । (गी०)
सर्वेऽपि नूनं सद्ग्रन्थाः "वेद एव तु सर्वशः" । (म०भा०)
'ज्ञानिनः' सर्वदेशेषु सर्वजातिषु संति वै,
तथा 'साहसिका'श्चापि शूराः ये रणकर्मणि,
एवं वार्त्तासु 'दक्षा'श्च, तथैव 'व्रात'-जीविनः ;
'ब्राह्मणाः', 'क्षत्रियाः' 'वैश्याः', 'शूद्राः' चेति तथा, अर्थतः ;
संज्ञयाऽपि कुतो न स्युः तेऽपि, यद्वत्तु हिन्दवः ?
हिंदुजातिसहस्राणां चतूराशिषु भाजनं
यथा, तथैव सर्वेषां मानवानां भविष्यति ।
ये ज्ञानवृद्धाः यत्रैव भवेयुर्धर्मचिन्तकाः,
तपःसत्यदयायुक्ताः, 'ब्राह्मणो'चितवृत्तयः,
प्राप्नुयुर् नहि कस्मात् ते उचितां 'ब्राह्मणा'ऽभिधां ?
देशवेशोक्तिभिर्भिन्नाः, इष्टोपास्तिभिरेव च,
ब्राह्मणानां तु हिन्दूनां शतधा संति जातयः,
भेदानन्त्येऽपि सति-एवं सर्वाः ब्राह्मणसंज्ञकाः ;
कथं दोषाय संख्या सा स्याद् दश-द्वादश-अधिका ?
मा स्प्राक्षुर्मा विवाक्षुर्वा ह्येते ननु परस्परं,

वृत्तं वर्णानुरूपं चेत्, संज्ञा कस्मान् निवार्यते ?
(१) 'पादरी-क्जिमन्-प्रीस्ट-डिवैन'-इत्यादयः, तथा
(२) 'मौलवी-मुज्तहिद्-मफ़्ती-मुल्ला-पीर्-मुर्शिद्'-आदयः,
तथा (३) 'मोबद्' च 'दस्तूरः', (४) 'भिक्खवो', (५) 'यतय'स्तथा,
एवमन्येऽपि बहवः, तत्तत्संज्ञाभिरिङ्गिताः,
(१) ख्रीस्तीयाः ब्राह्मणाः सन्ति, (२) मुस्लिमाः ब्राह्मणास्तथा,
(३) पारस्याः ब्राह्मणाश्चापि, (४) बौद्धाः, (५) जैनाश्च ब्राह्मणाः;
एवं क्षत्रिय-विट-शूद्राः सर्वधर्मेषु संति वै,
सर्वेष्वपि च देशेषु, सर्वमानवजातिषु ।
देवताः भारतीयानां शतशश्च सहस्रशः
संत्येव; तत्र सन्त्वन्याः दश वाऽप्यथ विंशतिः ।
'तिलभाण्डेश्वर'श्चास्ति, तथा वै 'कर्दमेश्वरः',
'वटेश्वर'स्तथैवास्ति, तथा वै 'पर्वतेश्वरः',
'गंगेश्वर' स्तथा चास्ति, तथा वै 'नर्मदेश्वरः',
अपि 'नागेश्वर'श्चास्ति, 'नरसिंहेश्वर'स्तथा,
'श्रीगिरीश्वर' एवापि, 'वृष-नन्दीश्वर'स्तथा,
'शूलटंकेश्वर'श्चापि, 'दंडपाणीश्वर' स्तथा,
'चतुर्मुखेश्वर'श्चास्ति, तथा 'पंचमुखेश्वरः',
'दुग्धनाथेश्वर'श्चास्ति, 'वैद्यनाथेश्वर' स्तथा,
'सिंहाचलेश्वरो' प्यस्ति, तथा वै 'जम्बुकेश्वरः',
अन्येऽपि संति-असंख्येयाः तीर्थेष्वे'तादृशेश्वराः':
'वराहो','वामनः','कूर्मः','सुग्रीवो', 'हनुमाँस्तथा,
'गरुड'श्च, 'एकदन्तः' च, 'लम्बोदर-गजाननौ',
'अष्टबाहुः', 'चतुर्बाहुः' 'अष्टादशभुजेश्वरी',
यत् किंचिदश्मपिंडं च, मृन्मयी मूर्तिरेव वा,
दारुणा निर्मिता वाऽपि, कृत्रिमा, ऽकृत्रिमाऽपि वा,

ताम्रादि-निर्मिता वापि, वटिका वाऽपि कीदृशी,
वटादि-वृक्षाश्चैवापि, तथा गो-सर्प-वानराः—
पूज्यन्ते सर्वे एवैते हिन्दुभिर्नम्रबुद्धिभिः,
श्रद्धया, च, उपदेशाच्च तेषां 'धर्माधिकारिणां'।
वेदान्ते च प्रसिद्धं यद् "अचैतन्यं न विद्यते";
अतो यावन्ति वस्तूनि तावन्तः सन्ति च-'ईश्वराः'।
का हानिर्यदि मान्येत ततः 'काबा-ईश्वरो' पि सः,
'मक्का-ईश्वर'स्तथैव-अपि मान्येत'मदिना-ईश्वरः',
'मशद्-ईश्वर' स्तथा चापि, तथा 'करबला-ईश्वरः',
'दरगाह-ईश्वर'श्चापि, तथा च 'तकिया-ईश्वरः',,
'क़ब्र-ईश्वर' स्तथैवापि, तथा 'मक़बरा-ईश्वरः'?
मुस्लिमानामीदृशानि देव-तीर्थानि संति हि,
'अल्ले'श्वरस्तु सर्वत्र भिन्नैर्नामभिरीड्यते।
'परमात्मा'-ईश्वरो यद्वद् हिन्दुभिः सर्वनामभिः।
फ़िलिस्तीन-प्रदेशस्य तथा 'बेथ्लहमेश्वरः',
'यरुस्लीमेश्वर'श्चापि, तथा 'कल्वरीश्वरः',
'रोमेश्वर' स्तथा चापि, क्रिस्चनैर्ये समर्चिताः—
को दोषो यदि मान्येरन् एते,ऽन्ये चाऽपि तादृशाः?
एको 'गाड्'-ईश्वरो ह्येव सर्वस्थानेषु पूज्यते।
'अल्ला'-'गाड्'-'परमात्मा' चाऽप्येकार्थाः एव ते त्रयः।
समुद्रस्याऽपरे पारे, द्वारकायास्तु पश्चिमे,
'अर्ब'नाम्ना प्रसिद्धोऽस्ति देशो जनपदो महान्;
'अर्बाणां' अस्ति तत्रैका 'मक्का' नाम महापुरी,
यत्र 'काबेश्वरो' देवः 'अल्ला' नाम्ना समर्च्यते;
'हज्रुल-अस्वद्' इति ख्यातं ज्योतिर्लिङ्गमपौरुषं,
इब्राहीमर्षिणा, पूर्वं, 'काबा'-नामक-मंदिरं

निर्माय, स्थापितं तत्र, पूजार्थं, लोकभूतये ;
ज्वलदुल्कास्वरूपेणाऽपतद्, अश्ममयं, हि तत्,
नभसस्तु पुराकाले; न नरेण च टंकितं ;
ज्योतिर्लिङ्गमतः ख्यातं, अकृत्रिमं, अपौरुषं ।

प्रत्यब्दं 'हज्ज'-यात्रायै, तत्र गच्छन्ति मुस्लिमाः,
'ज़िल्हिज्ज'-नाम्नि मासे तु, शतशश्च सहस्रशः,
पृथिव्याः सर्वभागेभ्यो, यत्र यत्र वसंति ते ;
गत्वाऽब्धिना च मरुणा, मक्कानिकटमागताः,
वसित्वाऽसीविते वस्त्रे, त्यक्त्वा-उष्णीष-पदत्रकान्,
पद्भ्यामेव च गच्छन्तः द्वित्रक्रोशान्, ततस्तु ते,
काबामंदिरमासाद्य, विशंति-अस्याऽङ्गणं महत् ;
प्रक्षाल्य 'ज़म्-ज़मे' कुंडे, कुर्वंति च परिक्रमां,
काबा-गर्भगृहस्यैते, प्रणमंति च दंडवत् ;
प्रविश्य तद्गृहं पश्चात्, चुम्बन्ति-अश्मानं-'अस्वदम्',
ध्यायन्ति च परात्मानं क्षणाय-'अल्ला'-ऽभिधं ततः ।

हिन्दूनामिव सा पूजा, किन्तु द्रव्यैर्विना हि सा,
न पुष्प-धूप-नैवेद्य-जल-मिष्टान्न-कर्दमाः,
न-अक्षतानि, न पत्राणि, रक्तपीतं न लेपनं,
न ताम्र-रौप्य-खंडानां आह्वानं देवलैरपि,
न भिक्षु-आक्रोश-संबाधौ, न संमर्दः परस्परम् ।

'व्राह्म'-प्राये स्थितो धर्मे, 'इब्राहीमे'ति यः स्मृतः,
मान्यः प्रजापतिर् धर्मत्रयस्यापि-अनुयायिनां,
यहूदानां, क्रिस्चनानां, मुस्लिमानां तथैव च ;
चतुर्वर्षसहस्राणि तस्य कालाद् गतानि हि ;
तस्याऽन्ववाये च महापुरुषोऽभून् मुहम्मदः,
ईसाकालात् शताब्दे तु षष्ठे गच्छति पूर्णतां ;

मुस्लिमानां प्रधानर्षिः विशेषेण मुहम्मदः ;
सम्प्रदायास्तु सर्वेऽपि तेषां, तं पूजयंति हि ;
'कुरान'-नामकं तेषां प्रधानं धर्म-पुस्तकं ;
मुहम्मदेन 'दृष्टाः' ते मंत्रास्तत्र स्थितास्तु ये।
ईसा तथा क्रिस्चनानां प्रधानर्षिश्च; पुस्तकं,
'न्यू-टेस्टामेंट', यद् भाषा-सहस्रेऽपि-अस्ति-अनूदितं ;
कोणं कोणं पृथिव्याश्च, जातिं जातिं च मानवीं,
खीस्तीयैर्ब्राह्मणैस्तच्च प्रापितं लोक-सेवकैः।
सर्वेषामेव धर्माणां ऋषयः, पुस्तकानि च,
तीर्थस्थानानि चैवापि पवित्राणि भवंति हि ;
प्रत्येक-सम्प्रदायस्य, यथा सन्ति च हिन्दुषु—
अद्वैतिनां शाङ्कराणां, विशिष्टाऽद्वैतिनामपि
तथा रामानुजीयानां, माध्वानां द्वैतिनामपि,
निम्बार्क-प्रभुचैतन्य-वल्लभा-ऽद्यनुयायिनां।
किंतु संग्राहको धर्मः सर्वेषामपि 'मानवः' ;
अनन्ताश्चापि वै 'वेदाः' सर्वग्रन्थोपधायकाः ;
सर्वेऽपि धर्मग्रन्थास्ते "वेद एव हि सर्वशः"।
"देशधर्मान्, जातिधर्मान्, कुलधर्मांश्च शाश्वतान्,
पाखंडगणधर्मांश्च,शास्त्रेऽस्मिन्नुक्तवान्मनुः।"(म०)
मूलं न लभ्यते किंतु सर्वं प्रवचनं मनोः ;
लभ्ये ग्रन्थे स्मृतेः, धर्माः उक्ताः सर्वे न सन्ति ते।
भृगुणा संस्कृता चेयं लभ्यमाना मनुस्मृतिः—
इति तु स्पष्टमेवोक्तं तस्यामेव पुनः पुनः ;
"एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः,
एतद्धि मत्तोऽधिजगे सर्वमेषोऽखिलं मुनिः ;
ततस्तथा स तेनोक्तो महर्षिर्मनुना भृगुः,

तानब्रवीद् ऋषीन् सर्वान्, प्रीतात्मा, श्रूयतामिति ; ×
स तानुवाच धर्मात्मा महर्षीन् मानवो भृगुः,
श्रूयतां येन दोषेण मृत्युर्विप्रान् जिघांसति ;
अनभ्यासेन वेदानां, आचारस्य च वर्जनात्,
प्रमादाद्, अन्नदोषाच्च, मृत्युर्विप्रान् जिघांसति" ; ×
( प्रमादो, मदनो, मद्यं, उन्मादो, मादकं, मदः
प्रमाद-भेदाः सर्वे ते; "सुखं मोहनमात्मनः
निद्राऽऽलस्यप्रमादोत्थं, तत्तामसमुदाहृतं" ; गी०)
"इत्येवं मानवं शास्त्रं भृगुप्रोक्तं पठन् द्विजः,
भवत्याचारवान् नित्यं, यथेष्टां प्राप्नुयाद् गतिं" । (म०)
प्रसंगप्राप्तमेतच्चाऽवधार्यं सुविचारकैः—
क्षत्रियश्चादिराजश्च वक्ति स्वायम्भुवो मनुः,
"पतीन् प्रजानां असृजं महर्षीन् आदितो दश",
तथोक्तं पुनरेवाऽत्र यथाऽयं "मानवो भृगुः" ;
क्षत्रियस्य मनोः पुत्राः ब्राह्मणास्तु महर्षयः ;
एतेन स्पष्टमेवोक्तं प्राक्काले किल भारते,
वर्णता कर्मणैवाऽसीत्; न कथंचन जन्मना ।
भारतीयान् भृगुद्वारा यथा मनुरशिक्षयत्,
तथाऽन्याः स्वप्रजाभूताः जातीः अन्यैः अशिक्षयत् ;
शिक्षयिष्यति चैवाऽपि यथा-योग्यं पुनः पुनः,
स्वसृष्टैश्च, विसृष्टैश्च, पुत्रभूतैर्महर्षिभिः,
ऋषिभिश्च, तथैवाऽन्यैर्विविधैरधिकारिभिः ।
सर्वदेशो चतुर्वर्णाः, सर्वदेशे च 'मानवाः' :
हितध्याता च सर्वेषां वत्सलो भगवान् मनुः ।
बृहत्त्वाद् बृंहणाद् 'ब्रह्मा'; मननान् 'मनु'रुच्यते ;
महत्तत्त्वे मनोऽशो यः, स यस्मिन् संभृतोऽधिकं,

सर्वदर्शी, महायोगसिद्धिभिश्चापि संयुतः,
संयुक्तश्च तथा सर्वैर् महापुरुषलक्षणैः,
विशिष्टोत्कृष्टजीवोऽयं 'मनु'रित्यभिधीयते;
प्रवर्त्तकोऽयं वंशस्य मानवानां प्रजापतिः;
"वात्सल्ये मनुवन्नृणां"-पुराणेषूपमा स्मृता।
इतिहासे, पदं चैतद् अधिकारस्य वाचकं;
उच्चावचाश्च 'मनवो' बहवस्तत्र वर्णिताः।
कस्याः अपि महाजातेः आद्यः आरम्भकस्तु यः,
'मनुः' इत्युच्यते सोऽपि; सर्वाद्यस्तु प्रजापतिः,
सर्वेषां मानवानां च, मनुः 'स्वायम्भुवो'ऽभवत्।
सप्तमः तु-आर्यजातीनां मनुर् 'वैवस्वतो'ऽस्ति वै;
"सावर्णिः सूर्यतनयो, ऽसौ मनुः कथ्यतेऽष्टमः"; (दु०सप्त०)
अवान्तराश्च 'मनवः' सन्ति प्रति 'महामनुं'।
सुरथश्च समाधिश्च, यौ तौ 'स्वारोचिषे'ऽन्तरे,
खिन्नौ, विरक्तौ, आपन्नौ, तेपतुस्तपः उत्तमं,
तावेव हि पुनर्जातौ, "कलापग्राममास्थितौ",
मरुश्च सूर्यवंशीयः, देवापिश्चंद्रवंशजः;
महत् तपस् तपन्तौ च, "महायोगबलान्वितौ",
काले काले मनुष्येषु चातुर्वर्ण्य-व्यवस्थितिं,
जीर्णोद्धारं च, कुरुतः, आदेशात्तु महामनोः;
'सावर्णिश्चापि, 'व्यास'श्च भाविनौ-अष्टमेऽन्तरे।
मनोः सप्तर्षयः संति प्रत्येकस्य सभासदः;
ज्ञानानां व्यास-कर्त्ता यः तेषां, व्यासः स कीर्त्तितः;
अन्येषां अन्यकृत्यानि, राष्ट्रे वै मंत्रिणां यथा।
स्वायम्भुवेन मनुना-आदौ धर्माः ये प्रवर्त्तिताः,
अवरैः 'मनुभिः' तेषु क्रियते परिवर्त्तनं,

संकोचः, परिवृद्धिर्वा, देशकालानुसारतः ;
तत्तद्देशीय'र्षिभि'श्च धर्मस्तु व्यवसीयते ।
एवमेव प्रवृत्तास्तु धर्माश्च, स्मृतयो, बहु ;
स्वायम्भुव-कृतं किंतु सर्वाऽनुस्यूतमस्ति वै
चातुर्वर्ण्यं, प्रकृत्यैव, सर्वसंग्राहकं, यतः ।
अनेन विधिना, सर्वे धर्माः, सर्वाश्च जातयः,
'मानवानां' समानेयाः धर्मे नित्ये तु 'मानवे' ।
यदि न क्रियते त्वेवं, मिथ्या-पार्थक्य-दर्शनात्,
विनाशः एव भविता हिन्दू-धर्मस्य, निश्चितं ।
'भेदात्' क्षयः; चयो'ऽभेदात्'; एतत् प्रत्यक्षमेव वै ;
तथाऽप्यविद्या-प्राबल्याद्, 'भेदः' एव प्रसार्यते ।
'अभेद-भावो' वेदान्तैः सौमनस्याय घोषितो
यत्र, तत्र-'अभेद-भावो' विकरालो विजृम्भते,
वेदान्त-घोषं आवार्य, घोरं नर्दति गर्जति,
ग्रसिष्यन् वृत्रवद्, धर्मं, 'इन्द्रो' (राजा, शासको) यदि न रक्षति,
'दधीचि'-'आत्म-बलेर्' जातेनाऽनिवार्येण हेतिना,
तपो-विद्या-मयेन-र्षि-तेजसा संभृतेन च ।

उच्छास्त्रवर्त्तिराजनियंत्रणं कथं ?

(२३) प्र० "क्षत्रस्याति प्रवृद्धस्य", राज्ञश्चोच्छास्त्रवर्त्तिनः,
"ब्रह्मैव संनियन्तृ स्यात्; क्षत्रं हि ब्रह्मसंभवं", (म०)
इति यन्मनुना प्रोक्तं, अद्य तत्सम्भवेत् कथं :
कथं नु ब्रह्मजं क्षत्रं; कथं वा तन्नियन्त्रणं ?
उ० ज्ञानेनोत्पादितं शस्त्रं, अस्त्रं च विविधं तथा,
ज्ञानेनैवाऽन्यशस्त्रास्त्रैर् विहन्तुमपि शक्यते ;
ज्ञानं ब्रह्म; तथा शस्त्रं क्षत्रं; इत्यत्र रूपकं ।

ऐतिहासिकः एवाऽपि तथाऽर्थोऽन्योऽत्र विद्यते
'ब्रह्मा'ऽऽदेशात् प्रजाभिस्तु 'मनुर्' आदौ वृतो नृपः—
निदर्शनत्वेनेतिहासैः इत्याख्यानं तु कीर्त्यते ; (म० भा० शां० ६६)
प्रत्येक-जातौ वृद्धानां श्रद्धेयानां कदम्बकं
'ब्रह्मा'-इति बहुमान्यत्वाद् बृहत्त्वाच्चापि चक्ष्यते ;
एकोऽथवा वृद्धतमः सर्वमान्यः 'पितामहः' ;
तस्याऽऽदेशान् नरो योग्यः राजत्वे विनियुज्यते ,
तथैवाऽस्याऽज्ञयाऽयोग्यः राजत्वादपकृष्यते ;
ज्ञानिनो 'राजकर्तारो' ऽतः क्षत्रोद्भव-कारणं ।
अथ च, 'ब्रह्म'-नेतृत्वे, सुसम्भूय, 'महाजनः' ,
क्षत्रं उत्पथगं राज्याद् बलेनैवाऽवरोपयेत् ।
"स्ववीर्याद् राजवीर्याच्च स्ववीर्यं बलवत्तरं ; ×
सर्वं तु तपसा साध्यं, तपो हि दुरतिक्रमं" ; (म०)
यदि वा-एकस्य विप्रस्य महर्षेः, तपसाऽर्जिता ,
योगसिद्धा भवेत् शक्तिः तादृशी-ऐश्वर्यमयी-अपि ,
ऊच्छास्त्रवर्त्तिनं भूपं शापेनैव तु निर्दहेत् ।
"प्रजानां तु नृपः स्वामी, राज्ञः स्वामी पुरोहितः" ; (म० भा०)
एवं हि मानवे धर्मे राजा स्रष्टोऽभिरक्षिता ;
ज्ञानी च यन्ता तस्यापि, विधाता, चाऽनुशासिता ।
"विधाता, शासिता, वक्ता, मैत्रो 'ब्राह्मण' उच्यते" ; ×
सज्ज्ञानवान् प्रकृत्यैव "देवानामपि दैवतं ;
प्रमाणं चैव लोकस्य, ब्रह्म-एव-अत्र तु कारणं" ; (म० ११)
यस्मिन् 'ज्ञानं', 'ब्रह्म' 'वेदः' नास्ति, न 'ब्राह्मणो'ऽस्त्यसौ ;
यस्मिन् क्षत्र नियंतृत्वं नास्ति, न 'ब्राह्मणो'ऽस्त्यसौ ।

---

'हिन्द'-'हिन्दू'-शब्दोत्पत्तिः

(२४) प्र० सनातनस्य, चाऽर्यस्य, वैदिकस्याऽनुयायिनः,
धर्मस्य मानवस्य, अभिधीयंते हिन्दवः' कथं ?
उ० हेतोः नदानां पंचानां, प्रान्तः पंचनदः स्मृतः ;
तेषां तु पाश्चात्यतमः 'सिन्धुर्' नाम महानदः,
वर्षासु अस्ति स विस्तीर्णः महान् 'सिन्धु'-समुद्रवत् ;
'सैन्धवाः' इति नाम्ना तु ज्ञातास्तत्प्रान्तवासिनः ;
समस्तः सः प्रदेशश्च 'सिन्धु'-'सिन्ध'-इति कीर्तितः ;
तस्यास्ति पश्चिमे, देशः, 'पर्शिया' योऽभिधीयते ;
'फ़ारस्' इत्यपि स ज्ञातः, तद्भाषा चापि 'फ़ारसी',
मुस्लिमाऽक्रमणाद् अर्वाक्, धर्मस्य परिवर्त्तनात्,
भाषायाश्च तथैव-'अर्ब'-शब्दानां परिमिश्रणात्।
"पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना", (रघुवंशं)
इत्येवं कालिदासेन तद्देशीयास्तु वर्णिताः ।
द्वौ प्रान्तौ तस्य, 'पर्सिस्' च, 'पार्थिया' चेति, कीर्त्तितौ,
बभूवतुः पुरा काले, इत्यैतिह्यस्य कोविदाः ;
'पार्थाः' आसन्, द्वितीयस्य, सुप्रसिद्धाः धनुर्धराः ;
सर्वे ते प्रायशोऽभूवन् कुशलाः सव्यसाचिनः,
संमुखस्थाँश्च, पृष्ठस्थान्, चतुर्दिक्षु स्थितानपि,
बाणैरविध्यन् शत्रूंस्ते, पंडिताः रणकर्मणि ;
सर्वस्य तस्य देशस्य नाम-'आर्याना'ऽपि चाऽभवत्,
परिवर्त्तैश्च भाषायाः कालेन-'ईरान्' इति, क्रमात् ;
'आर्याः' एव हि तेऽभूवन् 'आर्याना'-देशवासिनः ;
आथर्वणस्तु वेदोऽभूद् अमीषां, इति केचन ;
'ज़िन्द-आविस्ता'-इति नाम्ना यत् प्रसिद्धश्चास्ति साम्प्रतं ।
कलहेऽङ्गिरसां चाऽपि भृगूणां च समुत्थिते,

भारताद् भार्गवाः केचिद् 'आर्यानां' जग्मुरञ्जसा ;
( इतीदृशाः कथाः संति; निश्चयस्तत्र दुर्लभः ) ;
कंठ-निर्मिति-भेदाच्च, 'स-कारः', तैः, 'ह-कार' वद्
उच्चार्यते; ऽतः तैः शब्दाः संस्कृताः विकृताः बहु ;
'सिन्धुर्' 'हिन्धुः', 'सैन्धवा'श्च, 'हैन्धवाः' इत्यतोऽभवन् :
क्रमशः, 'हिन्द', 'हिन्दू', च, 'हिन्दु-स्थाने' ति चैव हि ,
'हिन्दी' च, 'हिन्दोस्ताने' ति, चाऽभूत् शब्द-परम्परा ;
'ऐयोनिया' चेति नाम 'ग्रीस'-देशस्य यत् पुरा
अभूत्, तद् 'यवनै'रेव वासितत्वादभूद् इति ;
उक्तं च मनुना-एते तु यवनाः क्षत्रजातयः ;
एवमेव-'असुरा'श्चापि देशं 'आसुरिया'ऽभिधं ,
'आसीरिये'ति चाख्यातं वासयांचक्रिरे पुरा ;
'देवानां' भारतीयानां 'भ्रातृव्याः' एव ते ऽभवन् ।
प्रसिद्धं हि पुराणे यद्, 'असुरा'ऽपरनामकाः
दैत्याः, तथैव देवाश्च, भ्रातरो हि विमातृजाः ।
'द्वंद्वानि' देव-दैत्यानां प्रकृत्या शाश्वतानि च ।
पुराण'रूपक'स्यास्य बहवोऽर्थाः भवंति वै ,
आध्यात्मिकः, तथैवाधिदैविकः, च-ऐतिहासिकः ।
'सिन्धु'-देशः 'हिन्द' इति पारस्यैरभ्यधीयत ;
भारतस्य समग्रस्य ततो जाताऽभिधा क्रमात् ;
'ग्रीका'दि-'यवनैः' पश्चाद् 'इंडिया'-इत्येव सा कृता ;
यूरोपीयैः ततः सर्वैरद्यावधि तथोच्यते ।
'हिन्दू' शब्दो न 'धर्मस्य', देशस्यैवास्ति, सूचकः ;
'हिन्दू'-'हिन्दी'ति वा नाम्ना सर्वे भारतवासिनः
पारस्यादिभिरुच्यन्ते, 'हिन्दवो', 'मुस्लिमाः' अपि
'हिन्दू'-नाम्ना तु यो धर्मः साम्प्रतं बुध्यते जनैः ,

तस्य सत्यं नाम रूपं 'मानवो धर्म' एव हि,
यतः स 'मनुना'ऽऽदिष्टः, कर्मवर्णाश्रमात्मकः,
मानवानां तु सर्वेषां इहाऽमुत्र हिताय वै।

रूपकाणां व्याख्यानं

(२५) प्र० 'रूपकाणि' पुराणानां उद्दिष्टानि पुनः पुनः,
केषांचिदत्र व्याख्यानं कस्मान्न क्रियतेऽधुना?
उ० ग्रन्थेष्वन्येषु हिन्दी-आंग्ल-भाषाभ्यां निर्मितेषु तु
व्याख्यानं यतितं; पूर्वं अत्राप्येवं तु तत्कृतं,
केषांचिद्; अन्येषां चाऽत्र यथामति-उपकल्प्यते।
(१) 'समुद्रो' 'वरुण-आकाशौ' वेदे पर्यायवाचकाः;
आश्चर्याणां समग्राणां आकाशो 'ऽद्भुतसागरः';
"अदब्धानि वरुणस्य व्रतानि"; (वे०)
"समुद्र इव दुर्बोधो, × गुप्तार्थो वरुणो यथा"; (भा०)
शून्यः, सर्वार्थसम्पूर्णो; ऽव्यक्तो, व्यक्तनिधिस्तथाः
खं, ब्रह्म, अण्डैः असंख्येयैर् आचितं चितिरेणुभिः,
सूर्यैः, चन्द्रैः, धरित्रीभिः, ग्रह-नक्षत्र-तारकैः,
विचित्राभिर् विभिन्नाभिः सृष्टिभिः पूरितैरपिः
जगति-असंख्याः अणवः, प्रत्यणौ च जगत्, तथा। (यो० वा०)
मूलप्रकृतिरेव-अस्य 'शेषो', यः शिष्यते कुषत्;
नाऽन्तो यस्य-अस्ति-'अनन्तो'ऽसौ, प्रलयेषु महत्स्वपिः
सर्वाः यस्मिन् प्रधीयन्ते विकृति-व्यक्तयो ऋधक्,
'प्रधानं' तत्; समुद्रेऽस्मिन् प्लवते व्यापकं कुवित्,
फणाऽसंख्यसहस्रैश्च सर्पवत् सर्पतीति च।
स-देवं च जगत्सर्वं तस्योपरि-अवलम्बितं।
'विष्णु'र्विसिन्वनाद्, 'ब्रह्मा' बृंहणात्', 'शयनात्' शिवः,

महत्तत्त्वस्य रूपाणि, त्र्योंऽशाश्च, गुणास्त्रयः।
'विष्णोः' 'सूत्रात्मनो' 'नाभेः' 'नालानि' च समन्ततः
प्रसृतानि; यथा नाड्यः शरीरे मानवे सुकं,
सम्प्रदाये यथा सौरे वितताश्चाऽर्करश्मयः;
तथैव 'विष्णोः' सूत्राणि विद्युत्-प्राण-मयानि च,
ब्रह्मांडान्यप्यनन्तानि, विश्वानि च, जगन्ति च,
एकीकृत्याऽप्यनेकानि, सम्यग् बद्ध्वा परस्परं,
'धारयंति'; प्रकृत्याश्च 'धर्मैः' संचारयंति च।
अंडान्येव हि 'पद्मानि'; यथोक्तं शांतिपर्वणि—
"मानसस्येह या मूर्त्तिर्ब्रह्मत्वं समुपागता,
तस्यासन-विधानार्थं पृथिवी पद्ममुच्यते"। (म०भा०शां०१८०)
"तामसस्तु मधुर्जातः कैटभश्चापि राजसः", ( ,, ३५७ )
अर्थात्, कामो मधुर्ज्ञेयः, क्रोधः कैटभ एव च।
तौ 'ब्रह्माणं' च 'वेदं' च सर्वदा हन्तुमिच्छतः;
'विष्णुः', सत्त्वमयं ज्ञानं, सदा तौ च नियच्छति।
(२) देवाऽसुराः प्रकृतयः वासनाः याः शुभाऽशुभाः,
( छां० उ० शां० भा० ),
असंख्याश्चाऽप्रमेयाश्च द्वंद्वीभूताश्च शक्तयः,
सच्चिदानन्दरूपस्य परस्य परमात्मनः;
विरुद्धगतयः सर्वाः, चक्रवद्भ्रमकारिकाः,
विरोधेन विकर्षन्ति 'वासुं' प्राणं इतस्ततः;
'मन्दरः' तु 'शरीरं' च, प्रति 'ब्रह्मांडं' एव च।
समुद्रमंथनं ह्येतत् सदैवास्ति प्रवर्त्तितं,
सर्वत्राऽपि च संसारे, प्रत्येके हृदये तथा।
'वासुकेः', देवदैत्यैश्च, पर्यायेण विकर्षणाद्,
उत्पद्यते 'अग्नि'र्घोरा; संघर्षात्, सर्वजीवने,

क्रोधात्मकं करालं च विषं, दाहि, 'हलाहलं';
'शिवै'र्वृद्धैः प्रपीतेऽस्मिन्, लीलया, मन्थने पुनः,
जीवनस्योपयोगीनि 'रत्नानि'-आविर्भवन्ति वै;
तेषामर्थे पुनः स्पर्धा पक्षयोर्, युद्धमेव च।
सार्वत्रिकं, सार्वदिकं, एतज्जीवनचित्रणं।

(३) 'राहोः' आख्यायिका स्पष्टं 'ग्रहण'स्यैव रूपकं।
सूर्याचंद्रमसोर्मध्ये भूः नृत्यंती यदाऽऽव्रजेत्,
तस्याश्छाया तदा चंद्रं आच्छादयति चांशतः,
पूर्णतो वा, कियत्कालं; चंद्रग्रहणमेव तत्।
सूर्यभूम्योर्यदा मध्ये, भ्रमन्, आयाति चंद्रमाः,
सूर्यः पिधीयते तावन्नेत्रेभ्यो भूनिवासिनां,
छाया चंद्रमसश्चापि पतत्येव धरोपरि,
अंशतः, पूर्णतो, वाऽपि; तत् सूर्यग्रहणं मतं।

(४) वृत्राऽसुरकथा नूनं वर्षारूपकमेव हि;
निरुक्त-नामके ग्रन्थे उक्तं यास्कर्षिणैव तत्;
विशेषार्थास्तु द्रष्टव्याः हिन्दी-ग्रन्थे 'प्रयोजने'।

(५) सृष्ट्यादौ, सौरजगतः व्यवस्थायाः पुरा, ऽभवत्
संकुल-भ्रमणं भूरि खगोलानां, च घट्टनं;
मिथ्रार्थं दुर्विनीतानां बालानां इव, धावतां,
अन्योऽन्यं मृद्नतां चापि, प्राक्सम्यगुपवेशनात्;
यथा भूमेरिदानी तु चन्द्रः एकोऽस्त्युपग्रहः,
तथा बृहस्पतेः संति नव चंद्राः ह्युपग्रहाः;
सम्भूयते यत्, प्राक्काले, तेषां कश्चिदुपग्रहः,
भुवश्चन्द्रमसाऽकृष्टः, तेन सम्मर्दमाप च,
भग्नाभ्यां च तदंशाभ्यां 'बुधो' जातो नवो ग्रहः।
एवमेव हि सम्भाव्यः, भूमेर्महति कम्पने,

'वराह'-विष्णोः भूमेश्च, जन्म भौम-ग्रहस्य वै।
(६) पूर्वं 'अश्वत्थ'-शब्दस्य ह्यत्र निर्वचनं कृतं;
तद्वदेव निरुक्तिः स्याद् 'अश्विनी'-ति पदस्य च;
'नासत्यौ' 'नासिका'-जातौ, श्वासः प्रश्वास एव च,
प्राणाऽपानौ, 'देव'-वैद्यौ, 'अश्विन्या'स्तु 'कु-मारकौ';
इन्द्रियाणि तु देवाः वै; "प्राणायामः परं बलं; ×
"प्राणायामैर्दहेद्दोषान्, धारणाभिश्च किल्बिषान्,
प्रत्याहारेण संसर्गान्, ध्यानेनाऽनीश्वरान् गुणान्"। (म०)
(७) 'कश्यपः', 'पश्यकः', सूर्यः ( निरुक्त );
भूः, दितिश्चा, ऽदितिस्तथा,
तथैवान्यानि रूपाणि यानि-उक्तानि त्रयोदश
भार्यात्वेन-अस्य; नज्जाताः मुख्याः सर्वाश्च 'जातयः'
सर्वेषां जीवजन्तूनां भूमेः, याः स्युः त्रयोदश।
(८) अगस्त्य-तारकं त्वासीत् ध्रुव-स्थाने पुरा युगे;
भूमेर्-अक्षस्य सरणाद्, अगस्त्यो दक्षिणां दिशं,
अदृश्यत प्रस्थित इव, भूकम्पश्च महान् अभूत्,
विंध्यपर्वत-पातश्च, तथा-एकाब्धेश्च शोषणं;
पुनर्जलैर्महागर्त्तपूर्तिश्चाऽभूत् क्रमाद्, इति।
पुनः सरेच् चेद् अक्षोऽयं, अगस्त्यश्चोत्तरं व्रजेत्,
पुनर्भवेन् महाकम्पः, जलस्थल-विवर्त्तनं,
विन्ध्यस्य पुन'रुत्थानं', हिमाद्रेः 'पतनं' तथा।
"यच्चेदं दृश्यते किञ्चित् जगत् स्थावरजंगमं,
तत् सर्वं अस्थिरं, ब्रह्मन्, स्वप्नसंगमसंनिभं;
शुष्कसागरसंकाशो निखातो योऽद्य दृश्यते,
स प्रातर्-अभ्रसंवीतो नगः सम्पद्यते मुने;
यो वनव्यूहविस्तीर्णो विलीढगगनो महान्,

दिनैरेव स यात्युर्वीसमतां कूपतां च वा ;
यदंगं अद्य संवीतं कौशेयस्रग्विलेपनैः ,
दिगम्बरं तदेव श्वो दूरे विशरिताऽवटे ;×
शुष्यंत्यपि समुद्राश्च, शीर्यंते तारकाः अपि ,
ध्रुवोऽप्यध्रुवजीवोऽस्ति, कैवाऽस्था मादृशे जने ;
सोमोऽपि व्योमतां याति, मार्त्तंडोऽप्येति खंडतां ,
धराऽपि याति वैधुर्यं, कैवाऽस्था मादृशे जने" ।(यो०वा०)
(९) मेरुः पर्वतराजोऽस्ति, भू-मध्ये चाऽपि संस्थितः ,
देवानामालयश्चापि; त्रयस्त्रिंशच्च देवताः ;
महा-ईशश्च उ-मया सार्धं शिखरे रमतेऽस्य च ;
गंगा त्रि-पथ-गा चाऽपि शिरस्यस्य विराजते ;—
योगिनां तु शरीरस्य सर्वमेतद्धि रूपकं ।
'पर्वभि'र्निर्मितो यस्मात् तस्मान्मेरुस्तु 'पर्वतः' ;
'मेरुदंडः', पृष्ठवंशः शरीरे मानवे च सः ;
तत्र संचारिणी देवी शक्तिराद्या तु 'पार्वती' ;
'उ'-कारस्य निषेधेन, मा-इति-'उमा'ऽपि स्मृताऽस्ति सा ;
मुख्यनाडीत्रयं तत्र 'त्रिपथं' च 'नदी-त्रयं'
एकीभूतं, 'सुर'-सरिद्, 'गंगा' या 'गमनात्' सदा ;
तस्य मूर्ध्नि स्थितो देवो ब्रह्मरन्ध्रे महेश्वरः ;
अनन्तानां च 'केलीनां' तयोः 'कैलासः' 'आसनं' ;
मानस्यः केलयः ताश्च, सरस् तस्मात्तु 'मानसं' ;
'दीव्यंति', यत्तु क्रीडंति, विषयैरिन्द्रियैरपि ,
तस्माद् 'देवाः' इति प्रोक्ताः तास्ताः प्रकृतिशक्तयः ;
अक्षाभिमानिनो देवाः, पंचभूताभिमानिनः ,
महेश्वरस्य-'आत्मन'स्तु सर्वे ते वशवर्त्तिनः ;
'इदमं' द्रावयति-अस्माद्-आत्मा-'इदंद्र'स्तु कथ्यते ;

'इदंद्रं' सन्तमात्मानं 'इन्द्रं' आचक्षते बुधाः ; (उ०)
'देवानां ईश्वरश्च-इन्द्रः', इति पौराणिकी प्रथा ;
त्रयस्त्रिंशच्च पर्वाणि, 'गुरिकाः', वलयानि वा,
'मेरौ' भवंति यानि-इह, 'देवा'स्तावन्ति तानि च,
प्रत्येकगुरिकायाश्च नाड्योऽक्षान् प्रति निर्गताः ;
'ब्रह्मनालं' सुषुम्नैव; तथा च 'मणिकर्णिका',
'हिमालय'श्च, 'काशी' च, 'कैलासो', 'मानसं' सरः—
एतत्सर्वं तु मस्तिष्क-भागाः नाड्योऽथवा पृथक्,
'चक्राणि', 'कन्दाः', 'पीठाः' वा, उज्जीव्याः योगरीतिभिः ।
"ऋचो अक्षरे परमे व्योमन्, यस्मिन् देवाः अधि विश्वे निषेदुः ;
यस्तं न वेद किं ऋचा करिष्यति ?
य इद् विदुस् तत् त इमे समासते" ।(वे०)
उदाऽहृत्यर्थमेवात्र कृतं व्याख्यानमीदृशं ;
अधिको विस्तरो दृश्यो हिन्दी-ग्रन्थे 'प्रयोजने',
स्मर्त्तव्यमेतच् चैवापि,व्याख्याने नाऽस्ति निश्चितिः ;
तथोक्तं पूर्वमेवापि; तर्कः ऊहा च केवलं ।
(१०) एतद्ग्रन्थमूलभूतं वैदिकं यत्तु रूपकं,
विशदः किल तस्यार्थः; न-ईषत् तत्रास्ति संशयः ।
"सहस्रशीर्षा पुरुषः, सहस्राक्षः, सहस्रपात्"—(वे०)
मानवानां महाजातेरेवैतद् वर्णनं स्फुटं ।
"ब्राह्मणोऽस्य मुखमासीद्, बाहू राजन्यः कृतः,
ऊरू तदस्य यद् वैश्यः, पद्भ्यां शूद्रोऽजायत" ;(वे०)
"ब्रह्म वक्त्रं, भुजौ क्षत्रं, कृत्स्नमूरूदरं विशः,
पादौ यस्याश्रिताः शूद्राः, तस्मै वर्णात्मने नमः" ।
( म० भा० शां० भीष्मस्तवराजः )
यथा मानवदेहस्य शिरो ज्ञानाङ्गमस्ति वै,

तथा समाजदेहस्य ज्ञानि-वृन्दं भवेच्छिरः,
बाहू च रक्षि-संदोहः, पोषि-स्तोमः तथोदरं,
पादौ सर्वधरौ चापि निकरः श्रमिणामिति ।
'पद्भ्यां' इति चतुर्थ्यन्तं ऋचायां अस्ति वै पदं,
'समाजपादौ भवितुं', 'पादत्वाय', इति योजना,
अपरैस्तु त्रिभिर्वर्णैर् अस्यापि ननु साम्यतः;
नाऽपादानार्थकं ह्यत्र 'पद्भ्यां' इति पदं भवेत्,
नाऽन्यवर्णाय कस्मैचित् प्रयुक्ता पंचमी, यतः,
ब्रह्मणोऽङ्गेभ्यः उत्पत्तिं अपादानेन वादिनी ।
रूपकाणां पुराणानां व्याख्यानं क्रियते, यदि,
युक्तियुक्तं; तथा तेन जनानां बुद्धिवर्धनं;
(नाऽक्षरार्थेन मूढानां ग्राहाणामेव पोषणं);
भारतीयसमाजे च सज्ज्ञानानां प्रचारणं;
तथैव मूढग्राहाणां, श्रद्धाऽन्ध्यस्य च, नाशनं;
स्वाऽवलम्बिधृतेश्चापि, धैर्यस्य, अभ्यसनं तथा—
सत्यं 'स्व-राज्यं' प्राप्येताऽचिरादेव, तदा, स्थिरं ।

स्व-राज्य-निरूपणं

(२६) प्र० 'स्वराज्य'-शब्दस्तु-अत्यर्थं देशेऽस्मिन् श्रूयतेऽधुना;
कोलाहलो महान्; अर्थो न स्पष्टस्तावद् उच्यते;
किं तत्? कथं तत् साध्यं? को भेदोऽस्ति स्व-सु-राज्ययोः?
'स्व-राज्यस्य' स्वरूपं किं; 'पर-राज्यस्य' किं तथा?
वर्णाश्रमाणां धर्मेभ्यः सम्बन्धः कीदृशस्तयोः?
किं 'सम्यग्-दर्शनं', किं चाऽपि-'असम्यग्-दर्शनं' भवेत्?
'प्रयोगः' सु-कु-'दृष्टीनां' स्व-राज्य-स्थापने च कः?
उ० 'दर्शनं', नयनं, नेत्रं, नेता नीतिर् नयस्तथा,
'दृष्टिर्', मतिः, मतं, प्रज्ञा, बुद्धिः, धीः, धिषणादयः,

शब्दाः ह्येते समानार्थाः, प्रायशो , ( न तु सर्वथा ) ,
यथा 'दृष्टिः', यथा नीतिः, यथा बुद्धिस्तथा 'गतिः' ;
यथा मतिः, यथा प्रज्ञा, यथा धीश्च तथा 'कृतिः' ;
यथा 'नय' स्तथा 'चारः', तथा 'कार्यं' यथा 'मतं' ;
'दर्शन'स्याऽनुसारी-एव 'प्रयोगः' सर्वकर्मसु ।
किं तु 'दर्शन'-शब्दस्य विशेषाऽर्थोपि विद्यते ।
आत्मनो, ऽनात्मनश्चापि, सम्बन्धस्याऽनयोस्तथा ,
दर्शयेत् तात्त्विकं रूपं यत्, तद् 'दर्शनं' इष्यते ।
को'ऽहं', कथमिहाऽयातः, कुतः, कस्मात्, किमर्थतः,
किं 'इदं' दृश्यमखिलं, जीवनं-मरणं च किं ,
रागो, द्वेषः, सुखं, दुःखं, स्मृतिः, आशाऽदयश्च किं ,
वस्तूनां संग्रहेच्छा किं, किमियं मैथुनैषणा ,
भूतं-भवद्-भविष्यं किं, 'पृष्ठे-अत्र-अग्रे'ऽपि किं तथा ,
किं कालः, किं च देशो वा, गमनाऽगमनं च किं ,
किं चित्तं, किं शरीरं, किं इन्द्रियाणि, कुतस्तथा ,
किं भोज्यं-भोजनं-भोक्ता, ज्ञानं-इच्छा-क्रिया च किं ,
किं द्रव्य-गुण-कर्माणि, भेदः किं चित्त-देहयोः ,
द्वंद्वानि किं, जगत्सर्वं अपि द्वंद्वमयं कुतः ,
जीवानां किं कथं भेदो, ऽभेदश्चाप्यस्ति किं, कथं ,
सम्बन्धश्च किं अन्योऽन्यं, 'अहं-त्वं-सः' च किं, कुतः ?
मर्त्यः एव मनुष्योऽस्ति, नित्यो ऽमर्त्यो ऽथवा पुनः ,
लोको ऽयमेव,अन्यो वाऽपि, पुनर्जन्माऽस्ति वा न वा ?
स्वः किं, परः किं, राज्यं किं, प्राणि-भेदाश्च किं, कुतः ,
किं धर्मः, किमधर्मश्च, पुण्यं किं, पापं एव च ?
इन्द्रियैः सह सम्बद्धं नश्वरं हि-एव किं सुखं ,
यं आभ्युदयिकं चेति स्मृतिकाराः वदंति हि ,

इन्द्रियाऽतीतमपि वा शाश्वतं भास्वरं सुखं,
यं नैःश्रेयसिकं ते हि कथयंति परं सुखं ?
यद्युभौ सत्यमेव स्तः, प्राप्तव्यौ तौ कथं जनैः,
को मार्गस्ते उभे लब्धुं, अल्पविघ्नो बहूदयः ?—
प्रश्नानां ईदृशानां तु, चित्तमन्थनकारिणां,
विचारशीलजीवानां सात्त्विकानां विवेकिनां,
संशयोच्छेदकं, ग्रन्थ्युन्मोचकं, तोषकारकं,
सर्वांगीणं, सर्वशंकासमाधातृ, प्रसादकं,
उत्तरं मार्मिकं यत्तु दर्शयेत्, तद् हि दर्शनं।
वेदान्तेषु चोपनिषन्-नामस्वेतत् प्रतिष्ठितं।
नैतादृशं भवेद् यत्, तद् 'असम्यग्दर्शनं' मतं।
"आद्यं यत् त्रि-अक्षरं ब्रह्म, त्रयी यस्मिन् प्रतिष्ठिता,
स गुह्योऽन्यस्त्रिवृद् वेदः, यस्तं वेद स वेदवित्"; (म०)
सम्यग्-दर्शन-सम्पन्नः, 'वेदवित्', 'प्रणवार्थविद्',
आत्मविद् यः स एवेह "क्रियाफलमुपाश्नुते"; (म०)
निश्चयेन यतो वेत्ति स एव खलु तत्त्वतः,
किं कार्यं, किमकार्यं च, कथं स्यात् सत्फलं ध्रुवं।
"प्रवृत्तिं च, निवृत्तिं च, कार्याऽकार्ये, भयाऽभये,
बंधं मोक्षं च यो वेत्ति", मोक्षोपायांस्तथाऽखिलान्,
मानवीं प्रकृतिं सूक्ष्मां समग्रां अपि वेत्ति यः,
"सैनापत्यं च, राज्यं च, दंडनेतृत्वं एव च", (म०)
'पुरो-हितत्वं', 'आचार्य-कार्यं', 'साचिव्य'मेव च,
तथैव 'सार्थवाहत्वं', 'धर्माध्यक्षत्व'मेव वा;
नवीनायां अवस्थायां नूतनैश्चापि हेतुभिः,
नवधर्मव्यवसानस्याऽधिकारं तथैव च;
राज-मंत्रित्व-शास्तृत्व-नियोक्तृत्वानि चैव हि,

"सर्वलोकाधिपत्यं वा, स एवाऽऽत्मविदर्हति"। (म०)
'रक्षा-व्यूह'-प्रकरणे, वनस्थाश्रमि-वर्णने,
कार्यं सर्वजनीनं तु तेषामुक्तं विशेषतः,
कल्याणार्थं प्रजानां यद् 'यज्ञ'-शब्देन सूच्यते;
द्विज-त्रयाणां धर्मश्च "दानमध्ययनं यजिः"। (म०)
'उत्तम-स्व'-स्वरूपस्य. तादृशस्याऽऽत्मवेदिनः,
लोकैः सर्वैः श्रद्धितस्य, 'पुरः'(अग्रे) सर्वैः 'हितस्य' (प्र-हितस्य)च,
तथा 'प्रति-नि-धी'-कृत्य 'नि-हित'स्य 'प्रति'-इति च,
लोकानां हितकर्तॄणां धर्माणां निर्णयाय च,
धर्माम्नातृषु 'पर्षत्सु' सादरं 'प्र-हित'स्य च,
शासनं तु 'स्व-राज्यं' स्यात्; न त्वेवाऽनात्मवेदिनः।
"न सा सभा यत्र न संति वृद्धाः, वृद्धाः न ते ये न वदन्ति धर्मं,
धर्मो नाऽसौ यत्र न सत्यमस्ति, सत्यं न तद् यच्छलमभ्युपैति"।
(म० भा०)
"द्वा सुपर्णा सयुजा सखाया, समानं वृक्षं परिषस्वजाते,
तयोरेकः पिप्पलं स्वादु-अत्ति, अनश्नन् अन्योऽभिचाकशीति। ×
मनस्तु द्विविधं प्रोक्तं, शुद्धं चाऽशुद्धमेव च; ×
वासना द्विविधा ज्ञाता, शुभा चैवाऽशुभा तथा"। (उ०)
सर्वैः स्वानुभवेनैव बुध्यते तत् प्रतिक्षणं,
प्रत्येकहृदये द्वौ स्वौ, उत्तमश्च, अधमोऽपरः;
मनो हि, अशुद्धं, यत् स्वार्थसाधकं परपीड़या,
पापवासनया पूर्णं, तदेव 'स्वः अधमः' स्मृतः;
शुद्धं, यत् स्वार्थहानेन परार्थं तु निषेवते,
शुभवासनया पूर्णं, 'उत्तमः स्वो' ऽस्ति तन् मनः;
साध्नोति यत् शुभान् कामान् परेषां, 'साधु'रित्यतः।
सर्वाऽऽत्मैकत्वधीर्यस्मिन् उदिता मनसि, स्फुटा,

अन्यक्तैवापि वा, तद्धि मनः शुद्धं भविष्यति ;
'अभेदस्य' प्रकाशेन सह, शुद्धिर्विवर्धते।
समाजस्य-ईदृशाः जीवाः 'उत्तम-स्व'-स्वरूपिणः ,
शास्तृ-कार्ये नियुक्ताःचेत्, 'स्व-राज्यं' सिद्धमेव हि।
मानवीं प्रकृतिं चापि, मानवं जीवनं तथा ,
सर्वांगेषु न यो वेत्ति, पुरुषार्थांस्तथैव च ,
तथा तत्साधनोपायान्, जगतस्तत्त्वमेव च ,
मर्म संसरणस्यापि, स कथं शासको भवेत् ?
सर्वजीवनकार्येषु, मानवानां निदेशकः ,
मानवव्यवहाराणां कथं वा परिशोधकः ?
कारणानां च कार्याणां फलानां तु परम्परां ,
चतुर्दिग्व्यापिनी चापि, संततां, दूरगामिनीं ,
न वेत्ति-अदूरदर्शित्वात् त्वरया-एव-ईरितस्तु यः—
'ईदृशे नियमे जाते, फलं किं, कस्य कस्य च ,
सुखं वा यदि वा दुःखं ?'—न चिन्तयति यत्नतः ,
धर्मवक्ताऽसनं नाऽसौ अनात्मज्ञोऽर्हति कचित्।
"गुणवद् अगुणवद् वा कुर्वता कार्यजातं ,
परिणतिरवधार्या यत्नतः पंडितेन ,
अतिरभसकृतानां कर्मणां आविपत्तेर्
भवति हृदयदाही शल्यतुल्यो विपाकः" ; (भर्तृ०)
"सहसा विदधीन न क्रियां, अविवेकः परमापदां पदं ,
वृणते हि विमृश्य कारिणं गुणलुब्धाः स्वयमेव सम्पदः"।(किराता०)
मनुजानां सर्वधर्मान् पप्रच्छुर्मुनयो मनुं ,
यतः "स एव सर्वस्य विधानस्य स्वयम्भुवः
अचिन्त्यस्याऽप्रमेयस्य कार्यतत्त्वार्थवित् प्रभुः" । (म०)
विधानकार्यतत्त्वं यो न विजानाति मानुषः ,

कथं धर्मविधानं सः मानुषार्थं करिष्यति ?
अनात्मवेदिनां, राग-द्वेष-विप्लुत-चेतसां,
अहंकाराभिभूतानां, स्वार्थान्धानां च, लोभिनां,
अल्पश्रुतानां, क्षुद्राणां, कामिनां, अल्पदर्शिनां,
राज्यं यत् तु, तदेवास्ति 'पर-राज्यं' हि दारुणं।
बभ्रुवर्णाः, श्वेतवर्णाः, रक्त-पीता-ऽसिताश्च वा,
प्रकृत्या यदि ते दुष्टाः, भवेयुश्चाधिकारिणः,
सहोदराश्चेत् स्युः तेऽपि, 'पर-राज्यं' हि तन् ननु।
"सर्वभूतेषु चाऽऽत्मानं सर्वभूतानि चात्मनि, ×
समं पश्यन्नात्मयाजी, 'स्वा-राज्यं' अधिगच्छति;
सर्वं परवशं दुःखं, सर्वमात्मवशं सुखं,
एतद् विद्यात् समासेन लक्षणं सुख-दुःखयोः"; (म०)
मानवस्य तु देहोऽयं 'स्वार्थी'-एव परमः 'परः',
अशुभाभिर्वासनाभिः पूरितः प्रेरितो यदा;
वस्तुतोऽसौ 'परवशो', 'दुःखी', देहवशस्तु यः।
यः पुनर्वशमायातः 'शुद्धस्य मनसः' किल,
'निष्कामस्य', 'दया-मैत्री-मुदिता'दिमयस्य च,
'विद्यां' च दृष्टवान् यस्तु, सामीप्याद्, दूरतोऽपि वा,
सर्वलोकहितेच्छुश्च, स ह्येव 'आत्मवशो' ध्रुवं।
ईदृग् 'आत्मवशानां' तु राज्यं 'स्वा-राज्यं' अस्ति वै।
"अभयं, सत्त्वसंशुद्धिः, ज्ञानयोगव्यवस्थितिः,
दानं, दमश्च, यज्ञश्च, स्वाध्यायः, तपः, आर्जवं,
अहिंसा, सत्यं, अक्रोधः, त्यागः, शान्तिर्, अपैशुनं,
तेजः, क्षमा, धृतिः, शौचं, अद्रोहो, नाऽतिमानिता,
भवंति संपदं दैवीं अभिजातस्य सर्वदा"; (गी०)
ईदृशानां हि यद् राज्यं, 'स्व-राज्यं' तु तदेव हि।

'अविद्यायां' निमग्नाः ये, षट्शत्रुवशवर्त्तिनः,
कामक्रोधाऽभिभूताः ये, देहेन्द्रियपरायणाः,
"मोघाशाः, मोघकर्माणो, मोघज्ञानाः, विचेतसः,
राक्षसीं आसुरीं चैव प्रकृतिं मोहिनीं श्रिताः; ×
असत्यमप्रतिष्ठं ये जगदाहुरनीश्वरं,
अपरस्परसम्भूतं, किमन्यत्, कामहैतुकं,
एतां 'दृष्टि'मवष्टभ्य नष्टात्मानोऽल्पबुद्धयः,
प्रभवंत्युग्रकर्माणः क्षयाय जगतो हि ये; ×
कामोपभोगपरमाः, एतावदिति निश्चिताः,
आशापाशशतैर्बद्धाः, मत्सर-ईर्ष्या-परायणाः,
ईहंते कामभोगार्थं अन्यायेनाऽर्थसंचयान्;
'इदमद्य मया लब्धं, इमं प्राप्स्ये मनोरथं,
इदमस्तीदमपि मे भविष्यति पुनर्धनं,
असौ मया हतः शत्रुः, हनिष्ये चाऽपरान् अपि,
ईश्वरोऽहं, अहं भोगी, सिद्धोऽहं, बलवान्, सुखी,
आढ्यो, ऽभिजनवान् अस्मि, कोऽन्योऽस्ति सदृशो मया'; ×
आत्मसम्भाविताः एवं, स्तब्धाः, मानमदान्विताः,
यजन्ते 'नामयज्ञैः' ये दम्भेनाऽविधिपूर्वकं,
पारुष्य-दंभा-ऽहंकार-बल-क्रोधांश्च संश्रिताः,
'आत्मानं' 'पर'-देहेषु प्रद्विषंतो, ऽभ्यसूकाः", (गी०)
ईदृशाः अभिजातास्तु जीवाः सम्पदं आसुरीं।
यद् राज्यं ईदृशां, तत्तु 'पर-राज्यं' भयङ्करं।
'स्वदेशीयाः', 'विदेशीयाः', 'मुस्लिमाः', 'क्रिस्चना'श्च वा,
'शूद्र-विट्-क्षत्र-ब्रह्मा'दि-नाम धारक-हिन्दवः,
'चर्मणा' शुक्लवर्णाः वा, श्याम-गोधूमिलाऽर्जुनाः,
'कर्मणा' यदि 'कृष्णा'स्ते, 'धर्म'-हीनाः, अनार्यकाः,

'पर-राज्यं' हि तद्राज्यं; न स्व-राज्यं कथंचन।
एवं च, कर्मणा शुक्लो यः कश्चिद्, अपि चर्मणा
यत्किंचिद्वर्णवान्, यस्मिन् कस्मिन् देशे जजान च,
यदि प्रजानां श्रद्धायाः आदरस्य च भाजनं,
'आत्मीयत्वेन', 'स्व-त्वेन', प्रजाभिः 'स्वीकृतो' यदि,
'स्व-राज्यं' च 'सु-राज्यं' च नूनं तस्यैव शासनं।
शुक्लं, कृष्णं च, मिश्रं च, कर्म त्रिविधं उच्यते;
कर्माऽशुक्लं अकृष्णं यत्, तत्तु 'निष्कर्म' योगिनां। (यो०सू०भा०)
मानवस्य 'स्वदेशो'ऽस्ति यत्र यत्राऽस्ति मानवः;
अन्यथा, 'जन्मभूमि'स्तु मातृतल्पमिता-एव भूः।
"उदारचरितानां तु वसुधा-एव कुटुम्बकं;
अयं निजः, परो वा,-इति गणना लघुचेतसां"। (हितो०)
'स्वदेशो', यत्र मित्राणि; 'विदेशो', यत्र नो तथा।
'स्वदेशोऽयं, विदेशोऽयं—इति भावे तु कारणं
एतदेव, यदेकत्र लभ्यंते हि सहायकाः,
वेदिनः स्वस्य भाषायाः, वेशाऽचारसमाः अपि,
सखायो बान्धवाश्चापि; नाऽन्यत्र द्राक् तथा पुनः।
ये-अहिताः, ते 'विदेशीयाः'; 'स्वदेशीयाः' तु, ये हिताः;
स बन्धुः यः शुभं कुर्यात्; 'मातृभूः', या तु वृत्तिदा।
"न तेन वृद्धो भवति येनाऽस्य पलितं शिरः;
यो वै युवाऽपि अधीयानः, तं देवाः स्थविरं विदुः;
न हायनैः, न पलितैः, न वित्तेन, न बन्धुभिः,
ऋषयः चक्रिरे धर्मं; यो ऽनूचानः, सः नः महान्"। (भ०)
"उत्सवे, व्यसने (आपत्तौ) चैव, दुर्भिक्षे, राष्ट्रविप्लवे,
राजद्वारे ('कचहरी'), स्मशाने च, यस् तिष्ठति सः बान्धवः"। (हितो०)
राज्ये, सहोदरस्यापि रावणस्य, भयङ्करे,

विभीषणस्य, न्यूना वा, 'पूर्णा' वा, न 'स्वतंत्रता' ।
'डिक्टेटरा'दि राज्येषु साम्प्रतं चेदृशी दशा :
'पूर्ण-स्वतंत्रता' नूनं यद्यप्येषु 'विराजते' .
'प्रजा-तंत्रं' तथा नाम्ना जिह्वासु परिनृत्यति ।
'डिक्टेटरस्य' त्विच्छायाः विरुद्धं न मनाग् अपि
कोऽपि 'वक्तुं' समर्थोऽस्तिः 'कर्त्तुं' इत्यस्य का कथा ।
नूनं पाश्चात्यदेशेषु, पूर्वीयेष्वपि केष्वपि,
सत्यां आसुरसम्पत्तौ-अपि, संति गुणाः बहुः
तान् गुणान् अनु-कर्त्तुं च, हिन्दून्, केचन हिन्दवः .
आदिशंति, परन्त्वेते न त्यक्तुं 'जन्मवर्णतां'
इच्छन्तिः न च पश्यंति, यत् तेषां नास्ति सम्भवः
गुणानां, एतया सार्धं, संघत्वस्य विपक्षया ।
'कर्म-वर्ण' तयैवैषां गुणानामस्ति संगतिः ।
महाभारतकारेण राजोत्पत्तिकथा यथा
वर्णिता, सत्-स्व-राज्यस्य लक्षणं सूच्यते तया ।
श्रद्धेयानां समाजस्य वृद्धानामुपदेशतः,
महापुरुषं अग्र्यं तु प्रजाः राज्याय वव्रिरे ;
धीरवीराग्रणीर्, योग्यतमो रक्षण-कर्मणि,
श्रेष्ठो, वरिष्ठो यश्चाभूत् प्रजापालनकर्मसु :
स्थापितायाः, पुरा काले, ऋषिभिः, पारदृश्वभिः .
वृद्धैः, परिणतप्रज्ञैः, भद्रायाः सर्वतस्तथा
वर्णाश्रमव्यवस्थायाः यः प्राणैः प्रतिपालकः ।
"ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि,
सर्वस्याऽस्य यथान्यायं कर्त्तव्यं परिरक्षणं" : (म०)
अर्थाद् यो ब्रह्म-चर्येण विद्याभिश्च सुसंस्कृतः,
क्षतात् त्रातुं समर्थश्च, राजा कार्यः स एव हि ।

वृद्धाः ते 'राजकर्त्तारः' श्रूयन्तेऽनेकशः श्रुतौ ;
प्रजाभिर्वरणे सिद्धे, तेऽभ्यर्षिचन् नृपं ततः,
प्रतिज्ञाः कारयित्वा च, प्रजानां रक्षणाय वै ;
प्रजाभिः श्रद्धितानां च तेषां केचन मंत्रिणः
अभूवन्, अपरेऽमात्याः, सुमन्त्राः, सचिवास्तथा,
दूताश्च, प्राड्विवाकाश्च, प्रधानाश्च, पुरोधसः,
धर्माम्नानसभायाश्च सदस्याः अपरेऽभवन् ;
प्राज्ञाश्च साधवः सर्वे, प्रजाभिश्चादृताः वृताः ;
महोदये राज्य'यज्ञे' ऋषयो ऋत्विजो यथा।
"सैवाचार्यः पुरोधाः यः शापानुग्रहयोः क्षमः, ×
यत्कोपभीत्या राजाऽपि धर्मनीतिरतो भवेत् ; ×
न बिभेति नृपो येभ्यः तैः स्यात् किं राज्यवर्धनं ? ×
राज्यं, प्रजाः, बलं, कोषः, सुनृपत्वं न वर्धितं,
नाऽरिनाशः कृतः, तैस्तु मंत्रिभिः किं प्रयोजनं ?" (शुक्र०)
यथा राज्ञो ह्यमात्यास्ते नियन्तारश्च बोधकाः,
तथा तस्य च, तेषां च, सदस्याः धर्मपर्षदः
प्रजा-प्रतिनिधी-भूताः "सर्वभूतहिते रताः"।
इदं रूपं समग्रं तु 'सु-स्व-राज्यस्य' चित्रितं
पुराणैरितिहासैश्चाऽप्याऽख्यानैर्विविधैरपि।
"अत्रि अनु स्वराज्यं अग्निं उक्थानि वावृधुः,
विश्वा अधिश्रियो दधे।
अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियं
न मिनन्ति स्वराज्यं"। ( ऋ० वे० )
'स्वराज्यं, अन्नस्याऽत्तारं, अन्नवस्त्रैः सुपूरितं,
अग्निवत् प्रज्वलन्तं चाऽनुप्राप्य प्रज्वलन्ति वै,
शास्त्राणि उक्थानि सर्वाणि दधति-अपि-अधिकां श्रियं ;

सूर्यवच्च यशस्वन्तं, सर्वेषां सुप्रियं तथा,
न मिनन्ति, न हिंसन्ति, तमांसि-इव तु शात्रवः'।
स्वाधीनास्तु जनाः सत्ये स्व-राज्ये, स्वा-वलम्बिनः,
उत्कर्षयन्ति सततं विशिष्टान् स्वान् गुणानिति;
पर-राज्ये पुनः सर्वेऽपकृष्यन्ते गुणाः, अपि
वर्धन्ते च तथा दोषाः दासबुद्धिसहोदराः।
"वर्णानां आश्रमाणां च राजा सृष्टोऽभिरक्षिता"; (म०)
नाऽन्यद् राज्ञोऽस्ति कर्त्तव्यं ईदृक्संरक्षणाद् ऋते।
"परिणिष्ठितकार्यस्तु नृपतिः परिपालनात्,
कुर्यादन्यन्न वा कुर्याद्, ऐन्द्रो राजन्यः उच्यते; ×
परिणिष्ठितकार्यस्तु स्वाध्यायेनैव वै द्विजः,
कुर्यादन्यन्न वा कुर्यान्, मैत्रो ब्राह्मणः उच्यते"; (म० भा० शां०)
कृतकार्यस्तथा वैश्यो धन-धान्याभिवर्धनात्,
कुर्यादन्यन्न वा कुर्यात्, पार्जन्यो (मारुतो, कौबेरो) वैश्यः उच्यते;
परिणिष्ठितकार्यश्च शूद्रोऽन्येषां सुसेवनात्,
कुर्यादन्यन्न वा कुर्याद् गान्धर्वः शूद्र उच्यते। (पद्मपु०; वायु पु०)
चातुर्वर्ण्ये प्रजाः यत्र, जीवनं चाश्रमेषु च,
सर्वाणि धर्म-कर्माणि, कृत्य-तोषणकानि च,
सुविभक्तानि रक्ष्यंते, समाजे सुव्यवस्थिते,
व्यूढे चाऽपि चतुर्व्यूहैः परस्परं अनुव्रतैः,
'कर्मणा वर्णता' यत्र, 'वयसा आश्रमिता' तथा,
'सु-राज्यं' च, 'स्व-राज्यं' च, 'स्वा-राज्यं' चापि तत्र वै।
आत्मदर्शनसिद्धान्तप्रयोगेण विना, नहि
चतुर्भिराश्रमैर्वर्णैः समाजस्य व्यवस्थितिः:
"चातुर्वर्ण्यं, त्रयो लोकाः, चत्वारश्चाश्रमाः पृथक्,
भूतं-भव्यं-भविष्यं च, सर्वं वेदात् प्रसिद्ध्यति"; (म०)

मनुष्याणां स्वभावानां योग्यतानां च कर्मणां,
चतुर्णां च पुमर्थानां, शास्त्राणां तदुपायिनां,
धर्माणां च, वयोभेदाद् आश्रमाणां च, तत्त्वतः
भेदाः, सर्वेऽपि सिद्ध्यंति सम्यग्दर्शनतः किल।
यत्र नैवं मनुष्याणां जीवनं सुव्यस्थितं,
स्वार्थाऽन्धाः यत्र 'नेतारः', स्वयं 'नीताः' कु-'दृष्टि'भिः,
कुमार्गेषु, उत्पथं क्लिष्टं 'नयंति' जनतामपि,
यथा विकृत-'नेत्रेण' 'नीयेता' ऽन्धो ऽवटे, तथा,
'पर-राज्यं', 'कु-राज्यं' च, 'नारकं राज्यं' एव तत्।
'पूर्ण-स्व-तंत्रता' यत्र, 'पूर्ण-स्वा-ऽधीनता' तथा,
स्व-स्व-उचितानां धर्माणां, निर्दिष्टानां विवेकतः,
पालनायैव वर्त्तेत, 'स्वा-राज्यं' तत्र वर्त्तते।
परेषां पीडनायैव, हत्यायै, लुंठनाय वा,
वलात्काराय वा स्त्रीषु, पापाय विविधाय च,
'पूर्ण-स्व-तंत्रता' यत्र, 'पूर्ण-स्वा-ऽधीनता' तथा,
भवेद् यत्र तु, तत्रैव 'रौरवं राज्यं' ऊर्जति।
"आर्षं धर्मोपदेशं च वेदशास्त्राऽविरोधिना,
यस्तर्केणानुसंधत्ते स धर्मं वेद, नेतरः; ×
पितृदेवमनुष्याणां वेदश्चक्षुः सनातनं,
अशक्यं अप्रमेयं च वेदशास्त्रमिति स्थितिः"; (म०)
वेदानां स्थितं अंतेषु, यद् 'औपनिषदं' स्मृतं,
वेदस्य शास्त्रं तद् हि-एव, 'रहस्यं' चेत्यपि, इति दिक्।
"छंदः पादौ तु वेदस्य, हस्तः कल्पोऽथ पठ्यते,
मुखं व्याकरणं प्रोक्तं, शिक्षा घ्राणं तथोच्यते,
ज्योतिषामयनं चक्षुः, निरुक्तं श्रोत्रमीर्यते",
आयुर्वेदोऽस्य नाभिस्तु, गांधर्वः कंठः ईर्यते,

ऊरू च शिल्पवेदोऽस्ति, धनुर्वेदो महाभुजौ,
कामशास्त्रं तु जघनं, अर्थशास्त्रमथोदरं,
हृदयं मानवो धर्मः, मूर्धा वेदान्तः इष्यते;
मूर्तिमान् भगवान् वेदः एवमंगैः सुसंहतैः,
विराजते सदा-उपास्यः सर्व-कल्याणं ईप्सुभिः।
"याः वेदबाह्याः स्मृतयः, याश्च काश्च कु-'दृष्टयः',
सर्वास्तास्तु तमोनिष्ठाः, प्रेत्य चेह च निष्फलाः;
अप्यर्वाक्कालिकतया, अनित्याः, अनृताः अपि,
उत्पद्यंते च्यवंते ताः", वर्षर्त्ताविव छत्रकाः;(म०)
राग-द्वेषौ तमो, मोहः; 'तमोनिष्ठा'स्तु तन्मयाः;
'सनातनस्य' सत्यस्य 'धर्मे' तु, परमात्मनः,
न निष्ठिताः, यतः, तस्माद् अनित्याः, अनृताः, अपि;
क्षुद्राऽल्पबुद्धिजनिताः, भवंति क्षणभंगुराः,
न स्थातुं चिरकालाय शक्नुवंति च कुत्रचित्;
व्याहन्यमानाश्चाऽन्योन्यं संघर्षाद्, बहुसंख्यकाः,
जंघन्यमानाः, दंद्रम्यमाणाः, तास्तु परस्परं।
आत्मदर्शनजा यत्र सु-'दृष्टिर्' 'नीति'-कारिणी,
'नेत्री', 'नयति' सिद्धान्तैः, शाश्वतैः, सुप्रतिष्ठितैः
तस्मिन् सनातने नित्ये 'स्व-भावे' परमात्मनः;
उत्पत्तिच्युतयस्तत्र, विप्लवोपद्रवास्तथा,
संघर्षश्चापि वर्गाणां ईर्ष्यया स्पर्धनेन च,
प्रत्यहं नाऽनुभूयन्ते; न नित्यं चाऽनवस्थितिः।
स्थापिता यत्र मर्यादा चतुर्वर्णाश्रमात्मिका,
तत्रैव सुप्रयोगोऽस्ति विद्यानां दर्शनस्य च;
शास्त्राणां व्यवहाराणां सुसम्बन्धश्च तत्र हि;
प्रणवार्थस्य सर्वस्य तत्रैव चरितार्थता;

चतुर्वर्गफलप्राप्तिः सर्वैस्तत्रैव चाञ्जसा ;
स्वप्रकृत्यनुसारेण तत्र जीवोऽप्यवाप्नुयात् ,
सर्वोऽपि, स्व-स्व-शक्तीनां, समाजस्य च भूतये ,
धर्म्यं विकासं, क्रमशः-अपि, आश्रमाद् आश्रमं व्रजन् ;
समाजश्चाऽखिलो भूयात् सदा सर्वसमृद्धिमान् ,
'क्षय'-रोगेण निर्मुक्तः, बलवान्, 'वृद्धि'मान्, सुखी ,
उत्तमानां च दैवीनां आस्पदं सर्वसम्पदां ।

'हिन्दू'-समाजस्य पुनः संस्करणं कथं ?

(२७)प्र० समाजस्याऽस्य 'हिन्दूनां' पुनः संस्करणं, कथं
व्यवहार्येण रूपेण सम्भवेच्च क्रियेत च ?
उ० पुनः पुनः पूर्वमुक्तं—सिद्धान्तानां प्रचारणं
आवश्यकं नितान्तं तु तत्राऽस्ति प्रथमः क्रमः ।
सत्सिद्धान्तप्रचारेण सज्ज्ञानं तु विवर्धते ,
ततो भावाश्च शुध्यंति, सदिच्छा जायते ततः ,
सत्क्रतुः, सत्प्रयतनं, सच्चेष्टा, सत्क्रिया ततः ।
शब्दौ स्तः आंग्लभाषायां 'थियरी'-'प्रैक्टिस'-इति च ;
मतिर्-गतिः, नयश्-चारः, शास्त्रं-व्यवहृतिस्तथा ,
ज्ञानं-कर्म, नीति-रीती, दर्शनं-चरणं सजुः ,
दृष्टिः-सृष्टिः, इति द्वंद्वाः पर्यायाः, संस्कृते तयोः ।
पूर्वं मतिः शोधनीया, गतिः शोत्स्यति तु स्वयं ।
प्रचारश्चापि कार्यः स्यात्, न शब्दैरेव केवलं ,
किंतु स्वाऽचरणेनाऽपि, तैस्तु ये स्युः प्रचारकाः ।
आचारेण हि या शिक्षा, सा-एव साध्वी, दृढा, ध्रुवा ;
"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" ; (गी०)
'आचार्य'-संज्ञां आप्नोति सदाचारेण शिक्षणात् ।

मिताः अपि भवेयुश्चेत् संख्यया, ते प्रचारकाः,
यदि स्युः 'तीव्रसंवेगाः', 'सत्य-निष्ठाः', दृढं, ऋतं;
सेनायां तु यथा योधाः तत्कार्याय समर्पिताः,
परमात्मनश्च, आदि-मनोः, ऋषीणां, सैनिकास्तथा;
फ़ारसी-आंग्ल-आदि-भाषाणां ज्ञानेनाऽपि च संयुताः,
तत्तद्भाषाऽभिभाषिभ्यो व्याख्यातुं भाषया तया,
मुस्लिमेभ्यो,ऽन्यधर्मिभ्यः, क्रिस्चनेभ्यस्तथैव च,
भावान् 'मानव'-धर्मस्य सर्वसंग्रहकारकान्;
सन्न्यासिनो, वनस्थाः वा, 'ऽप्येकाग्राः', 'सुसमाहिताः',
नाऽन्यचिंताभिरुद्विग्नाः, न 'व्याक्षिप्ताः' इतस्ततः';
कुर्युः प्रचारकार्यं च 'सत्कारेण', 'निरन्तरं', (यो० सू०)
'परिव्राजक-संशप्ताः', गन्तारः सर्वदिक्ष्वपि,
'मानवस्य समाजस्य' विष्वक् संस्थापनैषिणः;
ध्रुवं स्युः 'सत्य-संकल्पाः', सेत्स्यंत्येव स्वकर्मणि।
प्रचारणीयाः सिद्धान्ताः विस्तरान्ननु वर्णिताः
पर्यन्तमेतावद्; भूयः संक्षेपस्त्वत्र कथ्यते।
(१) आप्नुयुर्ब्रह्मचर्येण यौवनं तु नराः, स्त्रियः;
"ज्ञानं, शौर्यं, महः, सर्वं, ब्रह्मचर्ये प्रतिष्ठितं"।
ब्रह्मचर्यस्य सारोऽयं-इन्द्रियाणां विनिग्रहः,
दशानां च, स-मनसां; तानि जित्वा तु सर्वजित्।
'स्वस्य'-उपरि तु 'राज्यं' यत्, 'स्व-राज्यं' मूलं अस्ति तत्।
"ब्रह्मचर्येण तपसा देवाः मृत्युं उपाऽघ्नत"; (वे०)
मूलं प्राण-द्रुमस्यैतद् 'ब्रह्मचर्यं' यदुच्यते;
यत्राऽस्य नाऽदरः, तत्र निकर्षः, पतनं, ध्रुवं।
(२) नाऽप्राप्तयौवनानां च विवाहः स्यात् कथंचन;
वाग्दानं तु मिथः प्रीत्या सम्भवेत् पूर्वमपि-अतः।

(३) सात्त्विकं कामशास्त्रं च शिक्षेरन् प्राक् तु संगमात्,
तथा प्रसूतितंत्रं च, वालोपचरणं तथा।

(४) 'धर्मजं' सुतमिच्छेयुः, नेतरान् 'कामजान्' बहून्;
द्वाभ्यां त्रिभिर्वाऽपत्यानां तुष्येतामेव दम्पती;
यदा शुद्धं ब्रह्मचर्यं शक्नुयातां न रक्षितुं,
कुर्यातां गर्भरोधस्योपायान् वैज्ञानिकानपि;
तीक्ष्णं दंड्यो भवेत् ताँस्तु प्रयुञ्जन् अविवाहितः
पुरुषश्च, अपि योषा च प्रयुञ्जन्ती अविवाहिता।

(५) 'गर्भाधानस्य संस्कारं' तथा कुर्युर् विवाहिताः,
यथा-उत्कृष्टं अपत्यं हि जनयेतां; न चेतरं।

(६) प्रति पंचशतं चास्तु कुलानां, सूतिकागृहं
एकं, सुसज्जं सर्वोपकरणैः प्रसवस्य च।

(७) क्रियतां 'नाम-संस्कारः' पुरतः प्रतिवेशिनां।

(८) 'अन्नप्राशन-संस्कारे' भवेद् वृत्ति-परीक्षणं;
शिक्षकेभ्यः सूचनाय; न तु निर्णयनं तदा।

(९) लालयेत् पंचवर्षाणि; जननी शिक्षयेद् अपि,
शौचादीन्, वालसाभ्यांश्चाऽचारान्, नीतीस्तथैव च;
वालास्ततः पाठशालां गच्छेयुर् लब्धुमक्षरं,
अध्येतुं च तथा विद्याः, स्वप्रकृत्यनुरूपतः।
द्वे पाठशाले च स्यातां, कुलपंचशतं प्रति;
एका कुमारीशिक्षार्थं, कुमाराणां तथाऽपरा।

(१०) कन्या-अष्ट, नव, वर्षान् वा, स्त्रीभ्यः शिक्षामवाप्नुयात्,
वसन्ती स्वगृहे, शालां गच्छन्ती च दिने दिने;
आचार्यायाः, कुमार्यर्थं, 'कुलं' चेत्, तत्र वा वसेत्।
वालः दश, एकादश वा, पुंभ्यः स्त्रीभ्योऽपि वा, तथा,
कुमारपाठशालायां, वसन् स्वे, वा गुरोः, गृहे।

१६

पितरौ नयतो बालं गुरोर् 'उप'; गुरुश्च तं
'यज्ञ'-सूत्रेण-'उप-वाय', 'ब्रह्मण'श्च 'नयेद् उप'
इति; अतो मुख्य-'संस्कारं' तं तु-'उपनयनं' विदुः।
अनेनैव 'द्वि-ज'त्वं यत्, तस्मान् मुख्योऽयमुच्यते।
स्त्रीणां च-उपनयः कार्यः स्त्रीभिः, यद्वत् पुरा युगे।
"उपनीय गुरुः शिष्यं, शिक्षयेत्(१)शौचं आदितः,
(२) आचारं, (३) अग्निकार्यं च, (४) संध्योपासनमेव च"। (म०)
(१) धिषणा चाऽपि, (२) शीलं च, (३) शरीरं चेति, तत् त्रयं,
(१) ज्ञानं, (२) इच्छा, तथा (३) कर्म, शोभनं स्यात् दृढं तथा,
(१) सत्त्वं, (२) तमो, (३) रजो-ऽशाश्च भवेयुः परिमार्जिताः,
यया, सा-एव-उचिता शिक्षा; त्रयं साध्यं गुरोः कुले।
(१) ऋतु-(२) अहो-(३) रात्रि-चर्याश्च शिक्षणीयाः प्रयत्नतः;
विद्या 'संस्कारिणी' ग्राह्या, तथैवा'ऽर्थकरी' च या;
"अर्थागमो नित्यं, अरोगिता च, प्रिया च भार्या, प्रियवादिनी च,
वश्यश्च पुत्रो, अर्थकरी च विद्या, षड् भागधेयस्य सुखानि राजन्"।
(विदुर०)

शस्त्राऽस्त्राणां प्रयोगश्च शिक्षणीयो गुरोः कुले,
सर्वैः, पुंभिश्च, स्त्रीभिश्च, स्वरक्षायै तु संकटे;
'रक्षकैः' तु विशेषेण, सामान्येनैव चेतरैः।
सर्वेषामेव "वर्णानां" संकरे "कालकारिते",
क्षत्रियाणां रक्षकाणां अभावे चाऽप्युपस्थिते,
"शस्त्रं" तु सर्वैः स्याद् "ग्राह्यं, धर्मो यत्रोपरुध्यते",
आत्मीयानां "परित्राणे", स्वत्वार्थं "चापि संगरे;
स्त्री-बालाभ्यवपत्तौ च", योद्धव्यं तु विशेषतः,
सर्वैः, द्विजैश्च-एकजैश्च, प्रहर्त्तव्यं अचिन्तयन्;
"नाऽततायिवधे दोषो हन्तुर्भवति कश्चन,

प्रकाशं वाऽप्रकाशं वा, मन्युस्तन्मन्युमृच्छति" । (म० ८)
"क्षत्रियैर्धार्यते चापं नाऽऽर्त्तनादो भवेद् इति ।" (वाल्मी०रामा०)
"द्वावेव पुरुषौ ज्ञातौ सूर्यमण्डलभेदिनौ ,
योगी योगसमारूढः, शूरश्च समरे हतः ।×
अधर्मः क्षत्रियस्यैष यत् शय्या-मरणं गृहे ,
विसृजन् कफपित्तानि, कृपणं परिदेवयन् ;
अरण्ये वा विमुच्येत, संग्रामे वा तनुं त्यजेत्" ।(म०भा०)
गुरोः कुले तु द्रोणस्य सर्वे वर्णाः शिशिक्षिरे ।
कैकेयी, सत्यभामा च, सुभद्रा चापि दर्शिताः ,
इतिहासेषु, गच्छन्त्यः संगरान् पतिभिः सह ।
'राजा' दुर्गावती चापि, चांद-'राजा' तथैव च ,
झाँसी-'राजः' तथा लक्ष्मीः, शस्त्रैर्युयुधिरे स्वयं ।
सर्वाऽग्रगण्या चैवास्ति प्रवीरेषु तु चंडिका ,
दुर्गा, गौरी, महादेवी, याऽन्नपूर्णाऽपि चाऽम्बिका ।
स्वाऽपत्यरक्षणार्थं तु मातुः शूरतरो नहि ;
गावः स्व-शाव-रक्षायै वने सिंही-भवन्ति वै ,
व्याघ्रान् तरक्षून् शृंगाग्रैः क्षिपन्ति च निहन्ति च ।
(११) कन्या पंचदशादूर्ध्वं, विशेषे कारणे ऽसति ,
विवाहं चिंतयेत्ः शास्त्रं अभ्यस्येद् उत वाऽधिकं ।
(१२) युवा तावद् अधीयीत, वसन् स्वे, वा गुरोः, कुले ,
विद्यां विद्यालये यावद् गृह्णीयाज् जीविकाकरीं ।
ततः 'स्नातक-संस्कारं' प्राप्नुयात् सः, यथाविधि ;
'कुल-देश-समाजानां सेवां एवं-विधां अहं
करिष्यामि, तथा त्रीणि शोधयिष्ये ऋणानि च' ;
इति प्रतिज्ञां कुर्याच्च गुरूणां सविधे तदा ,
समक्षं च कुलीनानां, पौराणां च समागमे ,

लक्षितं 'यज्ञ'सूत्रेण धारयन् व्रतमुत्तमं।
आचार्यो निर्णयेच् चाऽस्य वर्णं, वृत्तिं तथोचितां,
श्रावयेन् निर्णयं चाऽपि तस्मिन् जनसमागमे।
(१३) चतुर्व्यूह-सहायेन, वृत्तिं वर्णाऽनुरूपिणीं
संसाध्य, स्नातको जीव्यात् तया जीविकया-एकया।
(१४) ततो मिथः परिचयात्, कन्यां प्रीतां प्रियामपि,
संवादिशीलव्यसनां, व्युह्यात् 'संस्कार'-कर्मणा,
'सह-धर्म-चरौ आवां भूयास्व'-इति निश्चयात्!
(१५) अधीत्य विधिवद् विद्याः, प्रजाश्चोत्पाद्य धर्मतः,
कुलं समाजं संसेव्य, मनो मोक्षे निवेशयेत्;
ऋणानि त्रीण्यपाकुर्वन्, आश्रमाद् आश्रमं व्रजेत्।
(१६) चतुर्व्यूहेषु च-एकस्य, सर्वोऽप्यवयवो भवेत्;
स्वस्य स्वस्य च वर्णस्याऽप्याऽश्रमस्याऽनुसारतः।
(१७) समान-शील-व्यसने भोजनं च विवाहनं।
"संप्रीति-भोज्यान्यन्नानि, आपद्-भोज्यानि वा पुनः,
न च त्वं प्रीयसे राजन्, न चैवापद्गताः वयं", (म०भा०)
दुर्योधनमिदं प्रोच्य, कृष्णो विदुरमाययौ।
(१८) भवेयुः नव संस्काराः स्त्रीणां पुंसां तथैव च।
गर्भाधानं, नामधानं, अन्न-प्राशनमेव च,
उपनयनं, स्नातकश्च, विवाहस्तदनन्तरं,
वानप्रस्थ-प्रवेशश्च, सर्व-संन्यसनं तथा,
अन्त्येष्टि-कर्म चैवापि; संस्काराः स्युः नव-एव हि।
कल्प्याश्च विधयोऽपि-एषां पुनः, सम्यग् विमृश्य च,
वेदमंत्रैः उदात्तार्थैः, हेतुमद्भिश्च कर्मभिः,
कालोचितानां यैश्चित्ते सद्भावानां भवेत् स्थितिः
गभीरा, संस्क्रियेयातां चित्तदेहौ च वस्तुतः।

(१९) वर्णाश्रम-व्यवस्था च, कर्मणा, वयसा, तथा,
चतुर्धा व्यूहनं चापि समाजस्य, विवेकतः
उत्तमं मूलमेवैतद् अशेषायाश्च संस्कृतेः,
प्र-णवी-करणं चार्य-सन्ततेस्तु समन्ततः ।
आहारस्य, विहारस्य, चरित्रस्य च शुद्धता,
मितत्वं संततेश्चापि, जीविकायाश्च निश्चितिः,
परमात्मनि निष्ठा च, समाजे शांति-हेतवः ।
(२०) सर्व-प्रसवितुः, सूर्ये बिम्बितस्य, परात्मनः,
प्रत्यक्षस्यापि-अदृश्यस्य देवस्य, जगदात्मनः,
सवित्रुपासना-एवैका, संध्यावंदनं एव च,
साक्षराणां च गायत्री-मंत्रश्चैकस्तथैव हि ।
"नोपतिष्ठति यः पूर्वां, नोपास्ते यश्च पश्चिमां",
आर्यत्वाद् भ्रश्यते नूनं, द्विजत्वं नाऽस्य सिध्यति ।
"समानी प्रपा, सह वो अन्न-भागः,
समाने योक्त्रे सह वो युनज्मि;
समानो मंत्रः, समितिः समानी,
समानं मनः, सह चित्तमस्तु वः;
समानं मंत्रं अभिमंत्रये वः,
समानेन वो हविषा जुहोमि" । (वे०)
बहूनां किंतु "अनाधारा धारणा नोपपद्यते",
"आत्मस्थं ये न पश्यंति देवं, मार्गंति ते बहिः",
"द्वे वाव ब्रह्मणो रूपे, मूर्त्तं चाऽमूर्त्तमेव च;
यन्मूर्त्तं तदसत्यं; यद् अमूर्त्तं सत्यमेव तत्", (मै०उ०)
स्वप्रकृत्यनुरूपं च सर्वोऽपीष्टमपेक्षते,
"ये यथा मां प्रपद्यंते, तांस्तथैव भजाम्यहं",
"भक्तानां अनुकम्पार्थं देवो विग्रहवान् भवेत्";

मूर्त्ताद् अमूर्त्तं नयनं अभीष्टं परमं खलुं,
न मृत्तिका-क्रीड़नकेषु आमृत्योर्निरतो भवेद्—
इत्यादि हेतुभिः, स्थाप्याः मिताः काश्चन मूर्त्तयः,
अवान्तरत्वेन, अमूर्त्तस्य प्रतीका इवाऽऽत्मनः।
उपासना-मंदिराणि, विशालानि, मितानि च,
सुन्दराणि, पवित्राणि, सर्वदा निर्मलानि च,
सुसृष्टानि, प्रशस्तानि, पुर-शोभा-कराणि च,
तथा सर्वजनीनानि, कियन्त्येव भवंतु च;
वाटिकाभिर्यथाशक्यं परितो मंडितानि च।
संसृष्टानि गृहैरन्यैर् न स्युस्तानि कथंचन।
मूर्त्तिर् मुख्या च तत्रैका सूर्यस्य जगदात्मनः,
वृत्ता, विनाऽऽक्षान्, दीप्यन्ती, सहस्रांशुमती तथा;
बिम्बेनैका, अंशुभिर्नाना, ब्रह्म-जीवा-ऽनुरूपिणी;
शुभ्रा, धातुमयी वापि, निर्मिता स्फटिकेन वा।
गिरा-ब्रह्मा शिक्षकाणां; लक्ष्मीर्-विष्णुस्तथा विशां;
दुर्गा-शिवः रक्षकाणां; अश्विनौ सेविनां अपि;—
एताः विशिष्टेष्टानां च देवानां संतु मूर्त्तयः।
स्वे स्वे गृहे यथेष्टं तु सन्त्वन्याः अपि मूर्त्तयः;
न तु देवालये काश्चिद् अन्याः स्युः सार्वलौकिके।
उपासना-गृहे सर्व-जनीने मूर्त्तयस्त्विमाः—
प्रकाशात्मं, रवेर्बिम्बं, भ्राजिष्णु, किरणान्वितं,
( न-अतिदीप्तं तथा यत्स्याच् चक्षुषां क्षोभकारकं,
किंतु प्रसादनं, कान्तं, नेत्राणां प्रीतिवर्धनं ),
संस्थाप्यं पूर्वभित्तेस्तु मध्ये महति मंदिरे;
तस्य चाऽपि चतुर्दिक्षु यथास्थानं नवग्रहाः,
भ्रमन्तः इव वृत्तेषु, दर्शनीयाः समन्ततः।

उत्कीर्यंताऽपि 'गायत्री'-मंत्रो विम्बादधस्तथा ;
अन्यानि आदित्य-सूक्तानि श्रुत्युक्तानि स्मृतानि च ;
"सूर्यः आत्मा जगतस्तस्थुषश्च; नमस्ते आदित्य ;
त्वमेव प्रत्यक्षं ब्रह्मासि, विष्णुरसि, रुद्रोसि" ;(मै०उ०)
"एक एव हि लोकानां सूर्यः आत्माऽऽदिकृद् हरिः ; (भा०)
"नमः सवित्रे, जगदेकचक्षुषे, जगत्प्रसूतिस्थितिनाशहेतवे ,
त्रयीमयाय, त्रिगुणात्मधारिणे, विरिञ्चि-नारायण-शंकरात्मने"।
यानि नामानि चाऽन्येषु धर्मेषु, परमात्मनः ,
तत्तल्लिपिभिरेवाऽपि, लिप्या संस्कृतया तथा ,
उत्कीर्येरँश्च तत्रा ऽधः, सर्व-धर्म-समन्वयात् ;
स्थाप्येरन् मूर्त्तयस्त्वन्याः, अन्यभित्तित्रये,यथा—
एकस्यां ब्रह्मणश्चापि, सरस्वत्यास्तथैव च ,
चतुः-सनत्कुमाराणां बालानां वेदरूपिणां ;
अन्यस्यां खलु पद्मायाः, तथा नारायणस्य च ,
बालत्रयस्य, कामस्य, रामस्य, अधोऽक्षजस्य ( कृष्णस्य ) च ;
तृतीयस्यां शङ्करस्य, पार्वत्याः, बालयोस्तथा ,
गणेशस्य, च साम्बस्य। सुन्दराऽकृतयो ऽखिलाः ,
सर्वाः मनुष्यरूपिण्यः मूर्त्तयः स्युः; न भीषणाः ;
न मुखानि तु चत्वारि, न चत्वारोऽपि बाहवः ,
न षट्-शिरांसि, नो पंच, न गजस्य शिरोऽथवा ,
नाऽष्टौ भुजाः, न कपाल-माला-सर्पादि-भूषणं।
एतादृशाऽकाराणां तु देवानां वर्णनं हि, यत्
पुराणेषु कृतं, तत्तु रूपकं ह्येव केवलं ;
व्याख्याकारैः पंडितैश्च विद्वद्भिर् 'व्यास'-नामकैः ,
महाजनाय व्याख्येयं 'कथा'-काले च रूपकं ;
न मूर्त्तयः तदाकाराः स्थाप्याः देवालयेषु ; यत्

तासु-एव रमते चित्तं, दृढं गृह्णाति तास्तथा,
वास्तवत्वेन, बालानां, सुकुमारधियां अपि ;
न निराकार-तत्त्वेषु ततोऽभिमुखतां इयात्।
एतद्दोषं प्रपश्यद्भिर्, अन्यधर्मावलम्बिभिः,
मूर्त्तीर् अशेषतस् त्यक्तुं यतितं; न तु पारितं।
एहूकान्, मुस्लिमाः; बुद्ध-जिनयोर् अनुयायिनः,
मूर्त्तीस्तयोः; तथा 'सिक्खाः', 'ग्रन्थ'-नामक-पुस्तकं ;
क्रिस्चनाः, 'जीसस' स्याऽपि तन्मातुः, प्रतिमाः, तथा
चित्राणि-अपि विचित्राणि, 'क्रास'-यंत्राणि चैव हि ;
पूजयन्त्येव सर्वत्र, बहु वा, न्यूनमेव वा।
मानवीं प्रकृतिं दृष्ट्वा, मूर्त्तीनां विषयेऽपि, अतः
"आश्रयेन् मध्यमां वृत्तिं, अति चैवापि वर्जयेत्" ;
अरुन्धती-दर्शनवद्, अमूर्त्तं मूर्त्तितो नयेद् ;
असत्याद् वर्त्मनः सत्यं मृदूपायैः कृषेज् जनान्।
रामायणं तु वाल्मीकेर्, व्यासस्यापि च भारतं,
मुख्यानि च पुराणानि, ग्रन्थाः सन्त्युत्तमोत्तमाः,
( क्षिप्त-श्लोकान् असद्-भावान् विविच्यापि विरिच्य तु )।
न लभ्यन्तेऽन्य-भाषासु चेदृशाः बुद्धिवर्धनाः,
एकैकाख्यानकेनैव विविधार्थ-विबोधनाः,
बहुश्रुतेन यदि ते व्याख्यायन्ते यथार्थतः।
कस्यामपि च भाषायां नेदृशाः बुद्धिनाशकाः,
यदि-अल्पज्ञेन मूढेन व्याख्यायन्ते-अयथार्थतः।
मंदिरं, प्रतिसाहस्रं नृणां एकं भवेदपि ;
न पुनर्बहुसंख्यानि, वीथ्यां वीथ्यां, पदे पदे ;
स्वच्छाः सुमृष्टाश्चापि स्युः, न पुष्पादिक-कर्दमाः ;
अर्चा च दर्शन-ध्यान-प्रणामैरेव ; नाऽन्यथा ;

न पुष्पपत्रसलिलैः, न मिष्टैर्, न विलेपनैः,
न ताम्र-रौप्य-खण्डैः वा; न नादैर्भैरवैरपि ;
उत्तमं सूक्तगानं च वाद्यं चाऽपि भवेन्ननु,
सुप्रबद्धेन रूपेण, निर्दिष्ट-समयेषु च।
देवालयेन यद् भाव्यं आधि-व्याधि-हरेण, तत्
प्रत्येके स्याच् चिकित्सायाः शाला, चैकश्चिकित्सकः,
स्त्री-वैद्या च तथैवैका, तथोपकरणानि च :
इतिहास-पुराणानां व्याख्यायै, प्रति-मन्दिरं
शाला-एका च प्रशस्ता स्याद्, विद्वान् व्याख्याकरस्तथा,
यो रूपकाणि व्याख्यायेद् युक्तियुक्तैश्च हेतुभिः ;
नाऽन्धश्रद्धां वर्धयेत, नाऽर्थयेच्चापि दक्षिणां ;
प्रोत्साहयेच् च जिज्ञासां, शमयेच् च सदुत्तरैः
बुद्धियुक्तैः, हेतुमद्भिः, तोषकैः, ज्ञानवर्धकैः।
व्याख्यानशालायाश्चापि, चिकित्सायाः गृहस्य च,
चतुर्व्यूहाः एव कुर्युः निर्वाहस्य प्रबन्धनं,
यथा पाठस्य शालायाः, प्रसवस्यापि वै यथा।
स्वागताः सन्तु सर्वेषु मंदिरेषु एषु मानवाः
सर्वेऽपि; 'हिन्दवो' वा स्युः, स्युस्तथा वाऽन्यधर्मकाः,
नियमानां स्वच्छतायाः येऽपि स्युः प्रतिपालकाः।
प्रेम्णा पूतं मनो येषां, देहः स्नानादिभिस्तथा,
ते सर्वे स्वागताः सन्तु, सात्त्विकाऽनन्दकांक्षिणः।

'श्रद्धा'-विवेचनं

(२८) प्र० 'नान्धश्रद्धां वर्धयेत'-यदुक्तं, उचितं हि तत् ;
विना श्रद्धां न किंचिच्च क्रियते कार्यमुत्तमं ;
विरोधिवद् इमे वाक्ये; कथं भूयात् समन्वयः?

उ० आहत्या-एव हि सा श्रद्धा, या पात्रे स्थाप्यते मुदा ;
सात्त्विकी खलु सा ; यद्वत् पात्रे दानं तु सात्त्विकं ।
मा भूद् अपात्रे श्रद्धा वा, दानं, ज्ञानं, धनं, बलं ।
"श्रद्धामयोऽयं पुरुषः, यो यच्छ्रद्धः स एव सः" । (गी०)
यथाऽन्येषां महार्थानां शब्दानां दुर्दशा कृता,
स्वोत्तमार्थाद् विपर्यस्तः 'श्रद्धा'-शब्दोऽप्ययं तथा ।
'श्रत्, सत्यं' इति वेदेषु; सत्यत्वेन दधाति या
यं कंचिदुत्तमं भावं, पदार्थं पुरुषं नु वा,
सा बुद्धिरेव सत्-'श्रद्धा'; नाऽधमं लक्ष्यं आश्रिता,
मूढग्राहेण, वा ऽसत्यं पदार्थं, दुर्जनं नु वा ।
"श्रद्धां प्रातर्हवामहे, श्रद्धां मध्यंदिनं परि,
श्रद्धां सूर्यस्य निम्लुचे, श्रद्धे, श्रद्धापयेह नः" ; (वे०)
सवित्रुपास्तिरेवात्र, समाऽर्थो ननु 'श्रद्धया' ;
'परमात्मनि वै श्रद्धां, सायं प्रातर्हवामहे' ।
श्रद्धायाः महिमा त्वेवं वेदसूक्तेन सूच्यते ;
तादृश्याः किंतु, या माता महतां वीरकर्मणां,
तपस्यानां, च योगानां, आत्मसाक्षात्कृतेरपि ;
उच्चलक्ष्यस्य लाभाय 'श्रद्धया' तपनं 'तपः' ;
आविवेश यथा 'श्रद्धा', बालकं नचिकेतसं । (कठ०उ०)
असच्-छ्रद्धा पुनर्योनिः दानानां वञ्चकाय च,
कार्याणां च निकृष्टानां, नरकाय गतेरपि ।
गुरू-भवितु-कामाः ये, मुग्ध-वित्ता-ऽपहारिणः ;
'गुरौ श्रद्धा भृशं कार्या; न-ईषत् शंक्यं तु तद्वचः ;
नास्तिक्यमेव जिज्ञासा; अहमेव गुरुस्तव ;
यद्ब्रवीमि शास्त्रं तद्ध्येव; धनं स्वं मह्यमर्पय ;
प्राप्स्यसि स्वर्गमेवं त्वं'—इत्यादि बहुवादिनः ;

'इदं वृन्दावनं विद्धि, मां विद्धि यदुनन्दनं ,
आत्मानं गोपिकां विद्धि, विहरस्व यथा सुखं'—
एवं चरित्रभ्रष्टाः ये, परस्त्रीभ्रंशकारिणः ;
'सेव्याः पंच-म-काराश्च, तैरेव सुखजीवनं'—
एवं पापिष्ठभावाः ये, पापिष्ठाऽचरणास्तथा—
तेषु श्रद्धा, महत्पापं, लोक-संग्रह-नाशकं ।
चतुर्वर्ण-व्यवस्थैव, चातुराश्रम्यमेव च ,
धर्म-कर्म-विभागेन, लोक-संग्रहणं स्मृतं ;
तादृशाः वंचकाः, दुष्टाः, क्रूराः, कपटिनो भृशं ,
धर्म-कर्म-विलोप्तारः, लोक-विग्रह-कारकाः ।
"विरलाः गुरवः ते, ये शिष्य-संतापहारकाः ;
"गुरवो बहवः सन्ति, शिष्य-वित्ताऽपहारकाः ।
ईदृशेषु तु या श्रद्धा सा वै नरकगामिनी ;
ईदृशैरेव शब्दोऽयं निरये पातितो ऽधुना ।
अन्येऽपि तत्र, नैतावत् सन्ति ये पापबुद्धयः ,
तथापि मोहिताः स्वार्थैः विपर्यंति स्वयं, तथा
विपर्यस्यंति भावांश्च, शब्दान्, आर्षांस्तथैव च ;
जिज्ञासायाः भृशं भीताः, अशक्ताः उत्तरे यतः ,
विवर्त्तयंति प्राचीनान् पाठान् सुविशदान् अपि ।
"श्रुतिस्तु वेदो विज्ञेयो, धर्मशास्त्रं तु वै स्मृतिः ,
ते सर्वार्थेषु-अमीमांस्ये, ताभ्यां धर्मो हि निर्बभौ" ,—
इति प्रचलितः पाठः; कः इवाऽर्थोऽस्य वै भवेद् ?
श्रुति-स्मृति-अर्थ-निश्चित्यै 'मीमांसा' शास्त्रमुत्थितं ;
"ते सर्वार्थेषु मीमांस्ये"—इत्येवाऽत्र उपपद्यते ;
"यस्तर्केणानुसंधत्ते सः धर्मं वेद नेतरः , ×
प्रत्यक्षं चा, ऽनुमानं च, शास्त्रं च विविधाऽगमं ,

त्रयं सुविदितं कार्यं, धर्म-शुद्धिमभीप्सता"—
इत्यप्यग्रे स्वयं प्रोक्तं मनुना हेतुपूर्वकं ;
"हेतुभिर्धर्ममन्विच्छेन्, न लोकं विरसं चरेत्"—
एवं व्यासोऽपि वदति, भारते, शांतिपर्वणि ।
किंतु जिज्ञासया त्रस्ताः, पाठं अभ्रंशयन् छलात्,
प्रकाशयन्तो दौर्बल्यं स्वं, एतच्चालिखन् पुनः—
"योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः,
स साधुभिर्बहिष्कार्यः, नास्तिको वेदनिन्दकः", (म०)
'जिज्ञासैवाऽस्ति नास्तिक्यं', 'शेषं कोपेन पूरयेत्',—
इति-आश्रयन्तो दुर्नीतिं, सद्धर्म-ध्वंसकारिणी ।
नैसर्गिकौ गुरू बाल्ये पितरौ रक्षकौ परं
पालकौ पोषकौ स्निग्धौ, श्रद्धेयौ स्तः स्वभावतः,
बालोऽप्यव्यक्तया बुद्ध्या श्रद्धत्ते तौ निसर्गतः ।
सुपरीक्ष्य, द्वि-जं यं, तौ, 'नयेयुर्' 'उप', बालकं,
सोऽपि प्रकृत्या श्रद्धेयो बालस्याऽस्य भविष्यति :
सद्गुरोर्न विशेषोऽस्ति शिक्षणे पुत्रशिष्ययोः ;
गृह्णाति येन मंत्रेण गुरुः शिष्यं, किल आशयः,
तस्याऽपि चायमेवास्ति, यत् पुत्री-क्रियते ह्यसौ ;
"मम व्रते ते हृदयं दधामि, मम चित्तं अनु चित्तं ते अस्तु,
मम वाचं एकमनाः जुषस्व, बृहस्पतिस्त्वा नियुनक्तु मह्यं" ।
'पुत्रत्व'करणायाऽत्र, आवाह्यते तु 'बृहस्पतिः' ;
'जायात्व' करणायाऽस्मिन् मंत्रे देवः 'प्रजापतिः' ।
ईदृशो यत्र सम्बन्धः पवित्रो गुरुशिष्ययोः,
तत्र श्रद्धा-उचिता पूर्णा, स्नेहः पूर्णस्तथैव च ।
यदा प्राप्तवयाश्चास्ति, व्यवहारक्षमः स्वयं,
तदा श्रद्धा विधातव्या सुपरीक्ष्य समीक्ष्य च ;

"न विश्वसेद् अविश्वस्तं, विश्वस्तं नाति विश्वसेत्,
न वाऽत्यन्तं अविश्वस्तो, भवेदिति बृहस्पतिः"।
यथा ऽन्यत्र, तथैवाऽत्रापि, 'अति सर्वत्र वर्जयेत्';
श्रद्धां कुर्याद् गुणं दृष्ट्वा, दोषानपि परीक्ष्य च;
विद्वाँस्तु गुण-दोषज्ञः; न भवेच्छ्रद्धया जड़ः।
"उद्धरेदाऽत्मनाऽऽत्मानं, नाऽत्मानं अवसादयेद्;
आत्मैव ह्यात्मनो वंधुरात्मैव रिपुरात्मनः;
वंधुरात्माऽत्मनस्तस्य येनाऽत्मैवाऽत्मना जितः;
अनात्मनस्तु शत्रुत्वे वर्त्तताऽत्मैव शत्रुवत्; ×
आत्मन्येवात्मना तुष्टः, स्थितप्रज्ञः स उच्यते; ×
यस्त्वात्मरतिरेव स्याद्, आत्मतृप्तश्च, मानवः,
आत्मन्येव च संतुष्टः, स स्वराड् भवति ध्रुवं; ×
यत्र चैवाऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति, ×
स निश्चयेन योक्तव्यो योगो ऽनिर्विण्णचेतसा; ×
वाह्यस्पर्शेष्वसक्तात्मा विंदत्यात्मनि यत्सुखं,
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते; ×
सर्वभूतस्थमात्मानं, सर्वभूतानि चाऽत्मनि,
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः;" × (गी०)
"सर्वेषामपि चैतेषां आत्मज्ञानं परं मतं,
तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः; ×
आत्मनैव सहायेन सुखार्थी विचरेद् इह;
आत्मज्ञाने शमे च स्याद् वेदाऽभ्यासे च यत्नवान्; ×
आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथाऽऽत्मनः,
माऽवमंस्थाः स्वमात्मानं नृणां साक्षिणं उत्तमं; ×
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि,
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति; ×

सर्वमात्मनि संपश्येत् सच्चाऽसच्च समाहितः,
सर्वं ह्यात्मनि सम्पश्यन्, नाऽधर्मे कुरुते मनः ; ×
आत्मैव देवताः सर्वाः, सर्वमात्मन्यवस्थितं,
आत्मा हि जनयत्येषां कर्मयोगं शरीरिणां ; ×
एवं यः सर्वभूतेषु पश्यत्यात्मानं आत्मना,
स सर्वसमतामेत्य ब्रह्माऽभ्येति परं पदं।
सर्वभूतेषु चाऽत्मानं, सर्वभूतानि चाऽत्मनि,
समं पश्यन्, आत्मयाजी, स्वा-राज्यं अधिगच्छति" (म०)
"यस्तु सर्वाणि भूतानि आत्मनि एव अनुपश्यति,
सर्वभूतेतु चाऽत्मानं, ततो न विचिकित्सते"। (उ०)
"आत्मैव ह्यात्मनो नाथः; को नाथो ह्यपरो भवेद् ?
आत्मना हि सुदांतेन नाथं प्राप्नोति दुर्लभं"।
( बुद्धवचनं, धर्मपदे )
उद्धर्ताऽऽत्माऽऽत्मनस्तु-अस्ति, नाऽन्यः आत्मानं उद्धरेत्—
आत्मनि-एव-ईदृशी 'श्रद्धा', ह्युत्तमा सात्त्विकी मता।
"उत्थातव्यं, जागृतव्यं, योक्तव्यं भूति-कर्मसु,
भविष्यतीत्येव मनः कृत्वा, सततं, अव्यथैः"।
'स्वपद्भ्यां, सुस्थिरो भूत्वा, चलितुं शक्नुयाद् अपि,
बालोऽयं, शीघ्रमेवापि'—पितरौ नित्यं इच्छतः,
'आत्माऽवलम्बी, स्वाधीनो, स्वयंप्रज्ञो भवेद् अयं,
स्ववशो, न परप्रज्ञः, शिष्यो मेऽन्यसहायकृत्,
न सदा मन्मुखाऽपेक्षी'—इत्येवं सद्गुरुरेव च।
'अयं मान्यो गुरुत्वेन, न वा,-इति च विनिर्णयं,
यतस्त्वमेव कुरुषे, त्वं गुरूणां गुरुः स्वयं ;
इदं सत्यं, असत्यं वा, निश्चिनोषि त्वमेव यत्,
तत् त्वमेवाऽसि सत्यानां अपि सत्यतमो ध्रुवं ;

ईश्वरोऽस्ति, न वाऽस्ति, एतत् त्वं हि निर्णयसीह यत्,
ततः त्वमेवाऽसि नूनं ईश्वराणामपीश्वरः,
परमात्मा, परेशो, यः, "तत् त्वं असि"-एव निश्चितं।
न पुनस्ते शरीरं तन्, मृत्पिण्डं क्षणभंगुरं,
किं तु सर्वशरीरेषु व्याप्तो, यो-'अहं' तु, चिन्मयः।
ईदृशी याऽत्मनि श्रद्धा परमा सात्त्विकी तु सा।
'कामक्रोधाऽऽदिषट्कं' यद् 'रिपूणा'मस्ति च-आन्तरं,
'शमादिषट्कं' तस्यास्ति प्रतिपक्षः, क्रमात्, किल,
'शत्रोः शत्रुः', 'महामित्रं' मनुष्याणां अथ-आन्तरं;
तत्र 'श्रद्धा' च गणिता मित्रषट्के तु पंचमी,
षष्ठस्याऽत्मसमाधानस्याऽस्ति या नाऽन्तरीयका;
'शमो, दमः, तितिक्षा,-उपरमः, श्रद्धा, समाधिता'।
आत्मन्येव हि सा श्रद्धा भवेदात्मप्रदर्शिनी,
सर्वेभ्यश्चापि बंधेभ्यः सर्वथा मोक्षदायिनी।
यदा बाह्यान् पदार्थांश्च द्रष्टुं शक्नोति मानवः
स्व-चक्षुषैव, नाऽन्यस्य; तदाऽऽत्मानं कथं ह्यसौ
परस्य चक्षुषा पश्येद्? आत्मा-एव-आत्मानं ईक्षते।
आत्मन्येव परा श्रद्धा कार्या सर्वार्थदर्शिनी;
स्वा-राज्यं च, स्वराज्यं च, स्व-श्रद्धालुभिराप्यते।
'आत्मदर्शन'-जातानां सिद्धान्तानां प्रयोगतः
वर्णाश्रमव्यवस्थात्मं 'स्व-राज्यं' सिद्ध्यति-इह सत्।

'हिंसा'-'अहिंसा'-विवेचनं

(२९) प्र० कोचिद् वदंति-अहिंसैव सर्वत्र जय-साधनं,
स्वराज्यं पुनरासाद्यं भारतीयैस्तयैव च;
अन्ये विप्रतिपद्यन्ते; कथमत्र विनिश्चयः?

उ० योगभाष्ये परामर्शः—'वचनीयं विभज्य" वै ; (४-३३)
एकान्ता-ऽत्यन्त-वचनं अतथ्यं प्रायशो ननु ;
यतो द्वं-द्व-मयी सृष्टिः, अन्योऽन्याऽपेक्षिणौ-उभौ ,
साऽपेक्षं चाऽपि नैकान्तं, नाऽत्यन्तं, भवितुं क्षमं ।
एकान्ताऽत्यन्ततो 'ऽहिंसा', या 'महाव्रत'-रूपिणी ,
नाऽवच्छिन्ना जाति-देश-कालैश्च समयैरपि, (यो० सू० २-३१)
सद्यो 'विदेह'करणी सा, ऽत्यन्तं खलु मोचिनी ;
यतो हिंसां विना शक्यं नास्त्येव प्राणधारणं ।
जीवाणवस्तु आचाम्यन्ते प्रति-श्वासं च कोटिशः ;
सचेतनानि शाकानि भुज्यन्ते, ऽपि मुनिव्रतैः ।
"सहस्तानां अहस्ताश्च, दंष्ट्रिणां अपि-अदंष्ट्रिणः ,
फल्गूनि चाऽपि महतां, जीवो जीवस्य जीवनं" । (भा०)
कार्य-साधन-सम्बन्धे, 'सर्वत्र'-इति पदं, ततः ,
समीचीनं न भाति-इव; "वचनीयं विभज्य" वै ।
"अहिंसा परमो धर्मः" इति वाक्ये विमोहिताः ,
केचिद् 'हिंसां' च 'दंडं' च संकिरन्ति-अविवेकतः ।
'हिंसा' या साऽपराधानां, 'दंडः' एव हि सा स्मृता ;
'दंडो' निरपराधानां, 'हिंसा' घोरा-इति निश्चयः ;
"अदंड्यान् दंडयन् राजा, दंड्यांश्चैवाऽप्य दंडयन् ,
अयशो महद् आप्नोति, नरकं चाऽधिगच्छति" । (म०)
अबुद्धिपूर्वकं 'हिंसा' या अनिवार्या भवेदपि ,
बुद्धिपूर्वं च सद्-हेतोः, 'अहिंसा'-एव तु ते उभे ।
"गृहे, गुरौ, अरण्ये वा, निवसन्, आत्मवान् द्विजः ,
नाऽवेदविहितां हिंसां, आपदि-अपि समाचरेत् ;
या वेदविहिता हिंसा नियता, ऽस्मिंश्चराऽचरे ,
अहिंसामेव तां विद्याद्; वेदाद् धर्मो हि निर्बभौ ।×

आततायिनं आयान्तं हन्यादेवाऽविचारयन्; ×
नाऽततितायिवधे दोषो; × मन्युस्तन्मन्युमृच्छति" । (म०)
स्मर्त्तव्यमन्यच्चाप्यत्र, 'धर्मभेदो ऽधिकारतः' ;
सन्यासी "सर्वभूतेभ्यः ददात्यभयदक्षिणां" , (म०)
अहिंसा ऽत्यन्तिकी तस्य-उचिता तस्माद्; ऋते तु तां
याऽबुद्धिपूर्विका च, अनिवार्या च, यथोदितं ।
आत्मत्राणायापि नाऽयं कुर्याद् 'हिंसां' तु कस्यचित्;
मैत्रो, अन्-असुतृपश्चापि, न्यस्तदंडोऽपि-असौ स्मृतः ।
गृहस्थस्य तु धर्मोऽयं, रक्षेद् एव-आश्रितान् भयात्,
तेषामभ्यवपत्त्यर्थं हन्यादेवाऽततायिनः ।
क्षत्रियस्य च राज्ञश्च धर्मोऽयं परमः स्मृतः,
निर्दोषाणां तु रक्षायै दुष्टानां 'हिंसनं' ऋतं ।
निमित्तानि भवेयुश्चेद् तादृशानि, विशेषतः,
यत् कार्यसिद्धिः सम्भाव्या, शस्त्रहीनैर्, 'अहिंसया',
अवश्यमेवा'ऽहिंसा' स्यात् तत्र धर्मः परो ननु ।
केचनाऽशासते हिंसां उच्छेत्तुं मूलतो भुवः,
अहिंसायाः प्रचारेण; तथैवाऽत्मसमर्पणैः
हिंस्रेभ्यो, हृदयं तेषां विवर्त्तयितुमेव च ।
यस्य कस्यापि हिंस्रस्य भवेदीदृग् विवर्त्तनं;
हिंसानाशस्य नाऽशास्ति पृथिव्यां ननु सर्वथा ।
अध्यात्मशास्त्रसिद्धान्तस्तु अखण्ड्योऽयं सनातनः;
'द्वं-द्व-त्वमेव सर्वत्र'; तौ चाऽन्योऽन्यमपेक्षिणौ;
एकाऽभावे ऽपरस्यापि अभावस्तु भविता ध्रुवं;
प्रलये, तु उभयाऽभावः; सृष्टौ, चोभयवर्त्तनं ।
'अहिंसा परमो धर्मः'—सत्यमेतन्, न संशयः;
'हिंसा'-प्रवण-चित्तेभ्यः किंतु एतद् उपदिश्यते ।

'अहिंस्राः' ये प्रकृत्यैव, किमर्थं तान् इदं वदेत्,
शाकाऽहारिमृगान्वाऽपि, कपोतान्, गाः, शुकाँश्च वा ?
'हिंस्राः' वा ये प्रकृत्यैव, यथा व्याघ्रवृकादयः,
तान् प्रति अपि उपदेशोऽयं व्यर्थ एवेति निश्चितं ।
"हिंस्राऽहिंस्रे, मृदुक्रूरे, धर्माऽधर्मौ, ऋताऽनृते,
यद्यस्य सोऽदधात् सर्गे, तत्तस्य स्वयं आविशेत्" । (म०)
दोलायते मनुष्यस्तु उभयोः द्वैधे यतः, ततः
तदर्थं उपदेशोऽयं उपयुक्तो भवेत्, ननु ।
अर्थश्चाऽस्याऽयमेवाऽस्ति, 'निर्दोषं मा वधीः' खलु
न त्वेवार्थोऽयमस्य स्याद्, 'हिंस्रायाऽत्मानं अर्पय,
स्व-मांस-आश्रित-मांसैश्च वृकव्याघ्रांश्च तर्पय';
स्वदेहं एवं सन्न्यासी दद्याद्, अभयदोऽखिले;
न गृहस्थो; ऽथ तत्रापि 'क्षत्रियो' न-तरां पुनः;
'दुष्टानां दंडनं धर्मः परमः' क्षत्रियस्य वै ।
प्रकृतेर्द्वंद्वशीलत्वाद् भविष्यन्त्येव सर्वदा,
दुष्टशिष्टौ, क्रूरमृदू, हिंस्राऽहिंस्रौ, वृकीमृगौ,
दैत्यदेवौ, पापपुण्यौ, दंड्याऽदंड्यौ विरोधिनौ ।
'हिंस्राणां'अपि 'अहिंसा' या, सा अहिंस्राणां तु हिंसनं ।
एतेनाऽपि प्रसंगेन, सुप्रकाशं प्रदर्श्यते,
विना वर्णाश्रमव्यूहं, भ्रान्तिर्धर्मे पदे पदे;
न च सिध्येद् व्यवस्था सा, वर्जयित्वाऽत्मदर्शनं ।
संस्कृतज्ञेषु विद्वत्सु सर्वमेतत्तु विस्मृतं ।
'सर्वेषां व्यवहाराणां, गार्हस्थ्याद्यनुबंधिनां,
अथ किं, राजधर्माणां, रक्षायाः अपि कर्मणां,
सांसारिकाणां सकलजीवनस्योपयोगिनां,
विरोधिनी-एवाऽत्मविद्या, न त्वेषां सा विशोधिनी'—

इत्येव भ्रान्तिर् एतर्हि घोरा तेषु-उपचीयते।
विरक्ताः सर्व-कृत्येषु, न विरक्तास्तु भोजने,
अकृत्येष्वपि चाऽऽसक्ताः, शारीरेषु सुखेष्वपि,
दृश्याः वेदान्तिनम्मन्याः प्रायशो ह्यधुनातनाः।
घोरा-अन्धंकरणी भ्रान्तिः संहार्या-इयं प्रयत्नतः,
यदि मानव-धर्मस्य भवेद् उद्धारः ईप्सितः।
गुह्यो यः त्र्यक्षरो वेदः, तं विदित्वैव वेदविद्;
तद्विद्यायाः प्रचारेण, प्रयोगेण च जीवने,
वैयक्तिके चापि तथा ( यः प्रातिस्विकः ईर्यते ),
सामाजिकेऽपि तद्वच्च (यः सार्वस्विकः उच्यते ),
भारतोद्धारः आस्थेयः, पुनःसंस्करणं तथा
धर्मस्य, च समाजस्य, पुनश्च नवजीवनं,
सत्-स्वराज्यस्य संसिद्धिः, पुनः स्वा-राज्यमेव च।

प्रणव-व्याख्या

(३०) प्र० ॐ कारः त्र्यक्षरश्चापि तथैव-एकाक्षरोऽपि सः,
इत्युक्तं मनुना; एतच्च—"यस्तं वेद स वेदवित्"; (म०)
तस्य नामसु चैवोक्तं—'तारकं', 'सर्वविन्मतिः',
'तारः', 'सर्वज्ञताबीजं', 'उद्गीथः', 'प्रणव' स्तथा,
इति प्रभृति; तत्सर्वं समं अन्वीयते कथं?
उ० "ज्ञानं, एकक्षणाऽऽरूढं, अक्रमं तु, विवेकजं",
यस्य "ज्ञानस्य चाऽनन्त्याज् ज्ञेयं अल्पं" 'इदं' तु यत्।(यो०सू०)
"सकृत्-प्रभातं", प्रतिभाति यत् सकृत्, (उ०)
तड़िद् यथा, सर्व-विकाश-कारणं;
तमोमयाऽज्ञान-महांधकारतः,
सद्यश्च यत्तारयतीति 'तारकं।

संगृह्यतेऽस्मिन् अखिलं च 'दृश्यं',
तथैव 'द्रष्टा'ऽपि, अथ 'दर्शनं च,
क्रमं विना, एकक्षणे-एव सर्वं,
सदा च, तस्माद् इदं 'अक्रमं' च।
"क्रम-त्रय-समाश्रय-व्यतिकरेण या, संततं,
क्रम-त्रितय-लंघनं विदधती विभाति-उच्चकैः,
क्रम-एकवपुर्, अक्रम-प्रकृतिरेव, या शोभते,
करोमि हृदि तां अहं, भगवतीं 'परां संविदं'।
(काश्मीर-शैवतंत्रीय-'शिवसूत्रविमर्शिनी'-टीकायां 'ज्ञानगर्भ-'श्लोकः)
'अहं-एतन्-न'-इति संवित्, 'अहमं' च-'इदमं' तथा,
'न'-कार-रूपिणा एव-इह विवेकेन विविच्य च,
समाहरन्ती त्रीन् एतान् अपि-एकत्र, 'त्रि-वि-क्रमा',
एकेनैव क्रमेण-इयं, 'अक्रमा', सार्वकालिकी,
भूतं-भवद्-भविष्यच् च त्रयं, युगपद् एव हि,
एकेन-'अनवरत'-ज्ञानेन आवृणोत्येव सर्वदा।
सर्वं 'त्रि-अन्तर्गतं' ज्ञानं; अस्माद् ॐ 'सर्वविन्मतिः'।
'विवेकख्यातिर्' अप्येषा-एव 'आत्माऽनात्मविवेकतः';
सा-एव 'सत्त्व-पुरुषयोर्' 'अन्यता-ख्यातिर्' उच्यते;
'सत्त्वं' इत्यत्र संकेतो 'दृश्यस्य' सकलस्य वै।
•प्रणवस्य एकाक्षरत्वं, त्र्यक्षरत्वं तथैव, यत्,
तस्यैव सर्वा व्याख्या-इयं सांख्य-योगेषु सूचिता;
तथा च न्यायसूत्रेषु; वेदान्तेषु विशेषतः,
मांडूक्योपनिषन्मंत्र-गोपथब्राह्मणादिषु।
'न क्षरंति' कदाप्येते, 'अहं' च, 'एतच्' चाऽपि, 'न'-इति च,
त्रयोऽपि, अ-कारेण, उ-कारेण, न-कारेण सूचिताः,
'अक्षराणां' त्रयेण, एते त्रयः एव 'अक्षराः' स्मृताः;

समाहृताश्चापि सर्वे एकस्मिन् 'परमाक्षरे',
ॐ इति एकाक्षरेण उक्ते 'ब्रह्मणि' एव 'परात्मनि'।
किंतु एतत्, स्पष्टं अपि उक्तं, न बुद्धिं अधिरोहति,
मुमुक्षुत्वं युयुक्षुत्वं यावन् न उत्पद्यते हृदि,
'अस्मिता'-ऽभिनिवेशाश्च यावद् यान्ति न तानवं,
शांति-दांति-आदि-षट्-सम्पद् यावन् न उदेति भूयसी,
सर्वभूतहितेहा च यावन् नाऽस्ति गरीयसी,
वैराग्यं सात्त्विकं चापि, न तु राजस-तामसं;
परकम्पाऽनुकम्पा हि, परदुःखानुदुःखिता,
लक्षणं, समवेदित्वं, स्वार्थाऽहंकार-विच्युतेः;
'अहमेव पवित्रोऽस्मि, नाऽन्ये केचित् कचित् पुनः',
'अहमेवाऽभिजनवान्, कोऽन्योऽस्ति सदृशो मया',
'मोक्षार्हश्चाहमेवास्मि योगं साधयितुं क्षमः',
'नाऽन्यैर्वराकैः अस्पृश्यैः कार्यं मेऽस्ति इतरैर्जनैः'—
भावाः एतादृशाः दृप्ताः रुन्धते हृदयं यदा,
अहंकाराऽवृते तस्मिन् 'तार'-बोधो विशेत् कथं?
"यो मां प्रयतते हन्तुं, मोक्षं आस्थाय, पंडितः,
तस्य मोक्षरतिस्थस्य नृत्यामि च हसामि च,
अवध्यः सर्वभूतानां अहं एकः सनातनः", (म० भा० अश्व० १३)
एवं वदति कामोऽयं, 'अविद्याऽस्मितयोः' पिता,
पतिः, पुत्रस्तथैव, अपि 'ब्रह्म', तच्छत्रुरेव च।
कामं जेतुं काम एव, भूत्वा निष्काम-कामना,
आत्मानं जेतुं आत्मैव, भूत्वा सर्वात्मभावना,
शक्नोति; नाऽन्यः, कुत्रापि, कश्चनापि, कथंचन।
न केवलं स्वयं मोक्तुं, अपि मोचयितुं परान्,
न केवलं स्वयं योक्तुं, अपि योजयितुं परान्,

अहं-कारं तु विस्मृत्य, यो यतेत स बोधभाक्।
"विवेक-वैराग्यवतः एव बोधमहोदयः"। (यो० वा०)
प्रातिस्विका'ऽहमा' आच्छन्नं यावत् स्याद् हृदयं, नहि
सार्वस्विकस्या'ऽहमः' तु प्रवेशः परमात्मनः।
अहंकारे विगलिते भेद-बुद्ध्यधिकारिणि,
उदेति अभेद-बोधोऽयं परमात्मा स्वयं ध्रुवम्।
प्रणवस्य जपश्चापि, तस्य चैवार्थभावनं,
कृतः शुद्धेन वपुषा, तथा शुद्धेन चेतसा,
स्मृतो योगेषु विविध-बहु-कल्याणकारकः।
ब्रह्मणः प्रकृतेः रूपं, महाभूतं यद्, आदिमं,
आकाशं हि, गुणस्तस्य शब्दोऽयं प्रणवध्वनिः;
"सृष्ट्यादौ ब्रह्मणः कंठं भित्त्वा यस्माद् विनिर्गतौ,
'ॐकारश्च', 'अथ' शब्दश्च, तस्मान्माङ्गलिकावुभौ";
विभेदैः पुनरस्यैव सर्वे शब्दाः भवंति हि;
सर्वेऽर्थाः सर्वभावाश्च वाङ्मयस्याखिलस्य च,
अतो हि निहिताश्चास्मिन्; वेदमूलं ततो ह्ययं;
"वाच्यर्थाः निहिताः सर्वे, वाङ्मूलाः, वाग्विनिसृताः;
तस्माद् यः स्तेनयेद् वाचं, स सर्वस्तेयकृन् नरः"। ( म० )
यथा हि सत्ता-'सामान्ये', सत्ताः सर्वाः 'विशेषकाः';
यथा 'अहं-अस्मि' इति बोध-'सामान्ये', ऽन्यास्तु संविदः;
यथा तु बीजे 'सामान्ये' 'विशेषाः' पल्लवादयः;
यथा च बिन्दौ, आकाराः, रेखाः, गोलादयोऽखिलाः;
तथैव बुद्धितत्त्वस्य उपाधौ आदौ तु, प्रत्ययाः
'वैशेषिकाः', तथा शब्दाः तत्तत्प्रत्ययवाचकाः,
अशेषाः, शब्द-'सामान्ये' प्रणवे निहिताः सदा।
प्राणायाम-सहायः अतो जपोऽस्य आयुर्विवर्धनः,

'शिरो-व्रतादि'-चर्याणां साधकः, दिव्य-शक्तिकृत् ।
अशुद्धदेहचित्तेन कृतो, दोषकरो भृशं,
दुर्बुद्धिं, रोगं, उन्मादं, मृत्युं च जनयेद् असौ ।
"आ-ह-एव स नखाग्रेभ्यः परमं तप्यते तपः,
यः स्रग्वी-अपि द्विजो ऽधीते स्वा-ऽध्यायं शक्तितो ऽन्वहं"; (म०)
"प्रणवादि पवित्राणां जपः स्वाऽऽध्यायः" उच्यते ;
शब्दोच्चारणमात्रं न; "जपस्तस्यार्थभावनं"; ( यो०सू०भा० )
'अधिकं' यद्यद् 'इष्टं' स्याद्, यद्बलेन तद् 'ईयते' ,
बुध्यते, लभ्यते चैव, तद्धि एव 'अध्ययनं' स्मृतं;
धर्मा-ऽर्थ-काम-मोक्षाऽख्यः, वारंवारं श्रुतः स्मृतः,
पुरुषार्थ-चतुर्वर्गः निर्विवादोऽभ्युपेयते;
धर्मश्चार्थश्च कामश्च, त्रिवर्गो 'ऽभ्युदया'त्मकः,
परमः पुरुषस्यार्थः परमात्मेति उदाहृतः,
नास्ति श्रेयः परं यस्मात्, तच् च 'निःश्रेयसं,' तथा ,
यद्बलेन अधिगम्येत, तद्धि एव 'अध्ययनं' स्मृतं;
सच्छास्त्राणां तु सर्वेषां इयमेव परा गतिः,
साफल्यं, परमं लक्ष्यं, यच् चतुष्टयसाधनं ।
सर्वं 'अध्ययनं', 'स्वस्य', स्व-रूपस्य, परात्मनः,
जीवात्मनश्च, ज्ञानाय, अनुभवाय प्रवर्त्तते;
स्वस्यैवाऽध्ययनं, ज्ञानं, 'स्वाऽध्यायः' इति कथ्यते ।
ज्ञानस्य, अनुभवस्यापि, तत्त्वं गीतासु गीयते—
"अमानित्वं, अदम्भित्वं, अहिंसा, क्षांतिर्, आर्जवं,
अध्यात्मज्ञाननित्यत्वं, तत्वज्ञानार्थदर्शनं,
एतज् 'ज्ञानं' इति प्राहुः; 'अज्ञानं' यद् अतो ऽन्यथा ; ×
स्वाध्यायाऽभ्यसनं चैव वाङ्मयं तपः उच्यते ; ×
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः" ; (गी०)

"योगाः त्रयो मया प्रोक्ताः, नृणां श्रेयो-विधित्सया,
ज्ञानं, कर्म च, भक्तिश्च; न उपायोऽन्योऽस्ति कुत्रचित्;
निर्विण्णानां ज्ञानयोगो, न्यासिनां इह कर्मसु;
तेषु अनिर्विण्णचित्तानां, कर्मयोगस्तु, कामिनां;
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्,
न निर्विण्णो, नाऽतिसक्तो, भक्तियोगोऽस्य सिद्धिदः"; (भा०)
प्रणवस्य तु मार्गो यः, त्रयः तस्मिन् समाहृताः,
निष्कामी कामवान् सोऽस्ति, निष्कर्मी कर्मवाँस्तथा;
"प्रणवः सर्ववेदेषु, × गिरां अस्मि एकं अक्षरं; ×
अहं कृत्स्नस्य जगतः प्रभवः प्रलयः तथा;
मत्तः ('अहमः') परतरं न-'अन्यत्' किंचिद्; × आत्माऽहमस्मि च,
'अहं' आदिश्च, मध्यं च, भूतानां अंत एव च;
मयि ('अहमि') सर्वं 'इदं' प्रोतं, सूत्रे मणिगणाः इव;
ये चैव सात्त्विकाः भावाः, राजसाः तामसाश्च ये,
मत्तः ('अहमः') एवेति तान् विद्धि; न तु 'अहं' तेषु, ते मयि;
न मे 'अहमः' अस्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन,
नाऽनवाप्तं अवाप्तव्यं, वर्त्ते एव च कर्मणि; ×
चातुर्वर्ण्यं मया ('अहमा') सृष्टं गुण-कर्म-विभागशः,
तस्य कर्त्तारं अपि मां ('अहमं') विद्धि अकर्त्तारं अव्ययं;
न मां (आत्मानं) कर्माणि लिम्पन्ति, यतो नाऽस्ति फले स्पृहा",
(कृत्यबुद्ध्यैव कुर्वे यत्, ऋणनिर्मोचनाय वै,)
"इति मां ('अहमं', आत्मानं) योऽभिजानाति, कर्मभिर्न स बद्ध्यते।
सक्ताः कर्मणि अविद्वांसो यथा कुर्वन्ति वै जनाः,
कुर्याद् विद्वाँस्तथा असक्तः चिकीर्षुर्लोकसंग्रहं"। (गी०)
'स्वा-ऽध्याय'-शब्दस्यार्थस्तु निरुक्तः पूर्वमेव हि;
सच्छास्त्ररूपवेदानां 'अध्येयत्वं' तथैव च;

"योऽनधीत्य द्विजो वेदं अन्यत्र कुरुते श्रमं",
'अ-स्व-अध्याये', ह्यसच्छास्त्र-अध्ययन-अध्यापने तथा,
"स जीवन्नेव शूद्रत्वं आशु गच्छति साऽन्वयः;
षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतं;
तदर्धिकं, पादिकं वा, ग्रहणान्तिकमेव वा"।
आद्यं शिक्षकवृत्त्यर्थं; द्वितीयं क्षत्रवृत्तिकं;
अलं तृतीयं वार्त्तायै; चतुर्थं शिल्प-सेवयोः।
स्वा-ध्यायस्य 'प्रातिभस्य' 'तारस्य' महिमा-ईदृशः।
प्रणवस्याऽऽशयं जानन्, 'यज्ञ'-सूत्रं बिभर्त्ति यः,
आत्मानं 'उप' 'नीतो' यः, 'द्विज'-नाम तु सोऽर्हति;
स हि 'प्रतिभया' युक्तः, स जातः 'सर्व-विन्-मतिः'।
यज्ञ-सूत्रं प्रतीकं हि प्रणवस्यैव सर्वथा;
अपि मूर्त्तीकरोति एतत् 'तार'स्याऽर्थं तु तात्त्विकं;
एकवृत् च त्रिवृत् च एतत्, एकत्वे त्रित्व-सूचकं,
प्रकृतेस्त्रिगुणायाश्च, पुरुषस्य तथैव च
सच्चिदानन्दरूपस्य असंख्य-त्रिक-चितस्य च;
'वृत्त'त्वात्, तेन 'शून्य'त्वं द्वं-द्व-योगस्य च-अज्यते।
"महासरस्वति चिते, महालक्ष्मि सदात्मिके,
महाकालि आनन्दरूपे, ऐं-ह्रीं-क्लीं इति नामभिः
तंत्रेषु बहुधा गीते, त्वत्तत्त्वज्ञानसिद्धये,
अनुसंदध्महे, चंडि, वयं त्वां हृदयाम्बुजे"।
(दुर्गासप्त०, गुप्तवती-टी०)
द्वि-जैर्यद् धार्यते सूत्रं एतत्, तेन तु सूच्यते—
'द्विः जातोऽयं; द्वयोश्चापि, प्रकृतेः, पुरुषस्य च,
एकाऽनेकत्वरूपं च, शून्यत्वं चाऽपि संसृतेः,
दृष्टवान् सम्यग्; आत्मज्ञः; सर्वेषां हितचिन्तकः,

सम्यग्दर्शनसम्पन्नः; यज्ञाय प्रस्तुतः सदा ;
यज्ञायेव उप-वीतं ( 'वे', तन्तु-सन्ताने ) यत् सूत्रं एतेन धार्यते' ।
"दर्शनेन विहीनस्तु संसारं प्रतिपद्यते" ,
आत्मनश्च परेषां च बन्धान् क्लिष्टान् करोत्यसौ ,
"सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते" , ( म० )
भय-संशय-मुक्तोऽयं अन्यांश्च कुरुते तथा ।
अर्थोऽयं 'यज्ञ'-सूत्रस्य लुप्तप्रायो हि साम्प्रतं ;
'द्विजाः' तद् धारयन्तश्च प्रायशो नाम-धारकाः ।
अत एव हि जाता-इयं समग्रे पृथिवीतले ,
न केवलं भारते हि, दारुणा दुर्व्यवस्थितिः ।
सन्त्येव केचनाऽद्यापि शुद्धात्मानो 'द्विजातयः' ,
सत्यमेव द्विवारं ये जाताः, भुवि, तथाऽऽत्मनि ,
बोद्धारः, सात्त्विकाः, 'सन्तः', 'महात्मानः', तपस्विनः ,
प्राप्ताश्च विविधां काष्ठां योगस्य तपसस्तथा ;
'सन्त'-'औलिया'-'मिस्टिक्' इति नामभिर्विदिताः जनैः ,
हिन्दुभिर्मुस्लिमैश्चापि क्रिस्चनादिभिरेव च ।
देश-वेश-जाति-धर्म-भाषा-ऽचार-भिदासु च
बुद्धिर् न-अभिनिविष्टा-एषां, सर्वकल्याणकांक्षिणां,
एकं तु परमात्मानं सर्वजीवेषु पश्यतां,
तथाऽपि क्रूररूपेभ्यः सौम्यरूपाणि रक्षताम् ।
"स्व-शान्त-रूपेषु इतरैः स्वरूपैः
अभ्यर्द्यमानेषु, अनुकम्पिताऽऽत्मा,
परावरेशो, महदंशयुक्तो,
हि-अजोऽपि जातो भगवानिवाऽग्निः ।" (भा०)
"वात्सल्ये मनुवन् नृणां", "सर्वभूतहिते रताः",
न केवलं भारते हि, सर्वदेशेषु ते स्थिताः ,

पर्वतेष्वपि, अरण्येषु, तथैव नगरेष्वपि,
उच्चावचेन रूपेण, जीवन्तो वहुवृत्तिभिः,
साम्प्रदायिक-धर्माणां रूपाणि विविधानि च
धारयंतो, हृदा त्वेकं परमात्मानं आस्थिताः,
ध्यायंतो वर्धयंतश्च मानवानां हितं सदा,
मनोश्च, सप्तर्षीणां च, (ये भवंति 'आधिकारिकाः',
सर्वमानववंशस्य, अभ्युदयाय च मुक्तये),
तेषां अनुचराणां च, ते सर्वेऽप्यनुयायिनः;
अबुद्धिपूर्वकं केचित्, केचिद्वै वुद्धिपूर्वकं;
महाभागास्तु ते, येषां बुद्धिपूर्वं अयं क्रमः।
तेषामेव कृते नूनं धर्मो न नितरां मृतः।
सत्यसाधोः दम्भ'साधोः' विवेके निकषो हि अयं—
'स्वार्थ-निष्ठाः, न सन्तस्ते; सन्तस्ते, ये तु नेदृशाः;
लोभिनो ये, न ते सन्तः; ये सन्तः, ते न लोभिनः'।
'तपो-विद्या'-'शौर्य-रक्षा'-'दाक्ष्य-दान'-द्विकाः यतः
भारते विरलाः यस्माद्, धर्मोऽपि तरलस्ततः।
प्रणवाऽध्यायिनः, तस्य मर्मज्ञाः, तत्त्वदर्शिनः,
"एकान्तिनो हि पुरुषाः, दुर्लभाः वहवो ननु;
यद्येकान्तिभिः आस्तीर्णं जगत् स्यात्, सर्वदर्शिभिः,
अहिंसकैः, आत्मविद्भिः, सर्वभूतहिते रतैः,
भवेत् कृतयुगप्राप्तिः, आशीः कर्म-विवर्जिता"। (म० भा० शां०)
ॐ। भवंतु भूयो वहवः धरायां तादृशाः जनाः,
कुर्वन्तु सुव्यवस्थां च धर्म्यां सर्वत्र भूतले;
व्यपेतु राज्यं च कलेः; प्रेम्णः सत्यस्य च-ऐतु-अपि,
यत् सु-राज्यं, स्व-राज्यं च, स्वा-राज्यं च परात्मनः। ॐ

---

## प्रार्थना

ॐ

ॐ महाविद्ये, महामाये, नमस्ते, संविदे, चिते,
शक्तिं देहि, शिवं देहि, भोगं मोक्षं च देहि नः,
यशो 'धर्मा'र्जितं देहि, बलं देहि-'अर्थ'साधनं,
रूपं 'काम्यं' तथा देहि, द्विषो 'ऽज्ञान-भियो' जहि। ॐ
ॐ संश्रुतेन गमेमहि, मा श्रुतेन विराधिषि। ॐ
ॐ गणानां त्वा गणपतिं हवामहे, कविं कवीनां उपमश्रवस्तवं,
ज्येष्ठराजं ब्रह्मणां,ब्रह्मणस्पते,आ नः शृण्वन् ऊतिभिः सीद सादनं। ॐ
ॐ यो नः पिता, जनिता, यो विधाता, धामानि वेद भुवनानि विश्वा,
यो देवानां नामधा एक एव", तस्मै यत्नो विनतोऽयं समर्प्यते। ॐ
"यमेवैके वदंत्यग्निं, मनुमन्ये प्रजापतिं,
इन्द्रमेके, परे प्राणं, अपरे ब्रह्म शाश्वतं,
प्रशासितारं सर्वेषां अणीयांसमणोरपि,
रुक्माभं स्वप्नधीगम्यं तं नुमः पुरुषं परं"। (म०)
"यो वै न देवाऽसुरमर्त्यतिर्यङ्, न स्त्री न षण्ढो न पुमान् न जन्तुः,
नायं गुणः, कर्म, न सन्न चासन्. निषेधशेषो जयताद् अशेषः।
मादृक्प्रपन्नपशुपाशविमोक्षणाय,मुक्ताय,भूरिकरुणाय,नमोऽलयाय,
-स्वांशेनसर्वतनुभृन्मनसिप्रतीत-प्रत्यग्दृशे भगवते बृहते नमस्ते"।(भा०)
"यज्जाग्रतो दूरमुदैति दैवं, यदु सुप्तस्य तथैवैति,
दूरंगमं ज्योतिषां ज्योतिरेकं, तन्नो मनः शिवसंकल्पमस्तु;
यत्प्रज्ञानमुतचेतो धृतिश्च, यज्ज्योतिरंतरमृतं प्रजासु,
यस्मान्न ऋते किंचन कर्म क्रियते, तन्नो मनः शिवसंकल्पस्तु।"ॐ
म्लानं मुखं भरतदेशवासिनां भूयो भवेत् सुरभि सुप्रभायुतं,
भर्गो वरेण्यं उत्तेजयेत् तथा सवितुः सदाऽखिलजनस्य शेमुषी।ॐ

ॐ

## पाठकेभ्यो निवेदनं

अत्रोक्तान् विषयान् मुख्यान् वर्णाश्रमनिबंधनान्,
शमनान् सर्वशंकानां, समाजोद्धार-कारकान्;
बहुश्रमी च शास्त्रेषु, बहुदर्शी, बहुश्रुतः,
देशस्वाधीनतायै यः कारावासेऽपि कष्टभाक्,
विद्याविनयसम्पन्नः, मानवानां सिषेविषुः,
श्रद्धालुरार्षशास्त्रेषु, जानंश्च समयं नवं,
अवस्थापरिवर्त्तज्ञः, कर्मणा ब्राह्मणश्च सत्;
आर्षैर्वाक्यैर्मनोर्वाचो भाषमाणः, उदारधीः,
शब्दनिर्वचनैश्चापि सत्तर्कैरुपबृंहितैः,
ग्रन्थे 'मानवार्षभाष्ये', ग्रथ्यमाने तु साम्प्रतं,
इंदिरारमणो विद्वान् विस्तरात् कथयिष्यति।

---

कस्यचित् पठितुः चित्तं, शब्दैः कैरपि कर्कशैः,
यदि अखेदयं, आवेशात्, क्षमां तस्यार्थं अर्थये;
'मनोः' आभ्यन्तराऽऽज्ञा-एव, तस्य चाऽपि सिषेविषा,
हीना दीना भृशं क्षीणा भारतस्य च या दशा,
तस्याः निवर्त्तनेच्छा च तीव्रा, ऽऽवेशो तु कारणं;
इति ज्ञात्वा बुधाः सर्वे, सहृदः, सुहृदस्तथा,
वाक्कृतान् अपराधाँस्तु क्षमिष्यन्ति, इति याचना,
शब्दाऽर्थानां अशुद्धीश्च शोधयिष्यन्ति अनुग्रहात्,
करिष्यन्ति च साहाय्यं मनुधर्मप्रचारणे।

---

ॐ

# संक्षेप-विवरणं

अ० वे०, अथर्ववेदः
अ० पु०, अग्निपुराणं
अ० स्मृ०, अत्रिस्मृतिः
अ० गी०, अनुगीता
अ० को०, अमरकोष.
अ० वि०, अश्वविद्या
आ० ध० सू०, आपस्तम्बधर्मसूत्रं
आ० प्र०, आयुर्वेदप्रकाशः
उ०, उपनिषत्
ऋ० वे०, ऋग्वेद.
क० उ०, कठ-उपनिषत्
का० ब्रा०, काठकब्राह्मणं
किरा० अर्जु०, किरातार्जुनीयं
कू० पु०, कूर्मपुराणं
कौ० अ०, कौटलीयं अर्थशास्त्रं
गी०, भगवद्-गीता
गु० गी०, गुरुगीता
गौ० स्मृ०, गौतमस्मृति.
च०, चरकसंहिता
छां० उ०, छांदोग्योपनिषत्
तै० उ०, तैतिरीय-उपनिषत्
तै० सं०, तैत्तिरीय-संहिता
दु० स०, दुर्गासप्तशती
दे० भा०, देवीभागवतं
नि०, निरुक्तं
प० पु०, पद्मपुराणं
पा० गृ० सू०, पारस्करगृह्यसूत्रं
पु०, पुराणं
प्र० चं०, प्रबोध-चंद्रोदयं
बृ० उ०, बृहदारण्यकोपनिषत्
बृ० उ० वा०, ,, वार्त्तिकं
ब्र० वै० पु०, ब्रह्मवैवर्त्तपुराणं
ब्र० सू०, ब्रह्मसूत्रं
भ० ह०, भर्तृहरिशतकं
भ० पु०, भविष्यपुराणं
भा०, भागवतं
भा० मा०, भागवतमाहात्म्यं
भामती०, वाचस्पतिकृता शारीरक-भाष्य-टीका
म०, मनुस्मृतिः
म० भा०, महाभारतं
म० पु०, मत्स्यपुराणं
म० स्तु०, शिव-महिम-स्तुति.
मार्कं० पु०, मार्कण्डेय पुराणं
मै० उ०, मैत्रायणी उपनिषत्
य० वे०, यजुर्वेदः

या० स्मृ०, याज्ञवल्क्यस्मृतिः
या० शि०, याज्ञवल्क्यशिक्षा
यो० वा०, योगवासिष्ठं
यो० सू०, योगसूत्रं
यो० सू० भा०, योगसूत्रभाष्यं
र० वं०, रघुवंशं
व० स्मृ०, वसिष्ठस्मृतिः
व० उ०, वज्रसूच्युपनिषत्
वा० रा०, वाल्मीकि-रामायणं
वा० पु०, वायुपुराणं
वा० का० सू०, वात्स्यायन-कामसूत्रं
वा० सा०, वास्तुसारः
वि० नी०, विदुरनीतिः
वि० पु०, विष्णुपुराणं
वे०, वेदः
वै० सू०, वैशेषिकसूत्रं
श० ब्रा०, शतपथब्राह्मणं
शां० भा०, शांकरभाष्यं
शि० पु०, शिवपुराणं
शु० नी०, शुक्रनीतिः
सां० का०, सांख्यकारिका
सु०, सुश्रुतसंहिता
सू० सं०, सूतसंहिता
सू० उ०, सूर्योपनिषत्
ह० वं०, हरिवंशं
हितो०, हितोपदेशः

## श्री भगवद्दास-(डाक्टर भगवान्दास)-लिखिताः अन्यग्रन्थाः

---

The Science of the Self.

The Science of Peace. 2nd. edn.

The Science of the Emotions. 4th edn. in preparation. (Translations have appeared in French, Dutch, Spanish, & Norwegian).

The Science of Social Organisation.

The Science of the Sacred Word, or the Praṇava-Vāḍa of Gārgyāyana.

The Principles of Sanātana Vaiḍika Ḍharma, or the Science of Religion.

Kṛshna, A Study in the Theory of Avatāras.

Ancient vs. Modern Scientific Socialism.

Mystic Experiences, or Tales from the Yoga Vāsishtha. (Translation has appeared in French).

Concordance-Dictionary to the Yoga-Sutra & Bhāshya.

The Essential Unity of All Religions. 2nd. edn.

---

## श्री भगवद्दास-(डाक्टर भगवान्दास)-लिखिताः अन्यग्रन्थाः

समन्वय (हिन्दी)
प्रयोजन ( „ ; छप रहा है)
पुरुषार्थ ( „ ; „ )

---

यह सब ग्रन्थ The Indian Book Shop, Benares City; The Theosophical Publishing House Adyar, Madras; तथा अन्य पुस्तक-विक्रेताओं के यहाँ से मिल सकते हैं। The Essential Unity of All Religions और यह ग्रन्थ, अर्थात्, 'मानव धर्मसार', Kashi Vidya Pitha, Benares (Cantt.), तथा Dr. Bhagavan Das, Benares (Cantt.), से भी मिल सकता है। 'समन्वय' नाम का हिन्दी ग्रन्थ, "सस्ता-साहित्य-मंडल", नई दिल्ली, से मिल सकता है।

---